# पुरुदेवचम्पूप्रबन्धोऽर्हद्दासकविश्च ।



अस्मिन्पुरुदेवचंपूप्रबंधे श्रीपुरुदेवस्य–आदिब्रह्मणो वृषभजिनपते-श्चरित्रं तत्पूर्वभवप्रसंगघटितकथोपेतं गद्यपद्योभयरूपतामाश्रित्य महाकविना भक्तिप्रसन्नमनसा श्रीमदर्हद्दासेन शब्दार्थलालित्योपेतं संवर्णितम् । अस्मिन्प्रबंधे पदानां लालित्यं, श्राव्यः शब्दसंनिवेषः, श्लेषविरोधाभासालंकृती आश्रित्य बहुषु स्थलेषु चेतोहरतयावर्णनं, चित्तविस्मापिकाः कल्पनाः, चेतःप्रसादजनको धर्मोपदेशः इति विशिष्टा गुणा विलसन्ति ।

भगवतः पुरुदेवस्य कथैव तावत्परमरमणीया कथाकथकोऽयं महाकविरर्हद्दासश्च तन्निरूपणे नैजं सकलमपि बुद्धिपाटवं व्ययीकृत-वानतोऽयं चंपूप्रबंधः सकलविद्वच्चित्तचकोराह्लादने विधूयते इति निरारेकं वक्तुं प्रभवामः ।

महाकविश्रीहरिचंद्रविरचितजीवंधरचम्पूतोऽप्यस्मिन्प्रबंधे कथा-या रोचकतया सरसता चित्ताकर्षकता च विशेषतः स्फुरन्ती विदु-षामनुभवपथमायास्यत्यस्य पठनादित्यस्मन्मतम् ।

अस्मिन्प्रबंधे बहुषु स्थलेषु टिप्पण्यः, समानार्थकश्लोकाः, कठिन-श्लोकानां स्पष्टीकरणं, कोषप्रामाण्यं च स्वयमस्माभिर्योजयित्वा यथाशक्ति ग्रन्थकर्तुराशयः विशदीकृतः । पाठकानामस्य पठनसमये तेन सुगमता भवेदिति ।

अस्य चंपूप्रबंधस्य रचयिता महाकविरर्हद्दासः इति उपर्युक्तमेवा-स्माभिः । कविरयं आचार्यकल्पस्य श्रीमदाशाधरपंडितस्य शिष्य आसीदिति तत्कथनादवगम्यते—इत्थं तत्प्रमाणानि—अस्यैव प्रबंधस्य अन्ते एवं तेनाभिहितम्—

मिथ्यात्वपंककलुषे मम मानसेऽस्मिन्
आशाधरोक्तिकतकप्रसरैः प्रसन्ने ।
उल्लासितेन शरदा पुरुदेवभक्त्या
तच्चंपुदंभजलजेन समुज्जजृंभे ॥

श्रीमुनिसुव्रतकाव्ये अपरनाम काव्यरत्ने अन्तिमः श्लोक इत्थं—

मिथ्यात्वकर्मपटलैश्चिरमावृते मे
युग्मे दृशोः कुपथयाननिधानभूते ॥
आशाधरोक्तिलसदंजनसंप्रयोगैः
स्वच्छीकृते पृथुलसत्पथमाश्रितोस्मि ॥ ६५ ॥

भव्यंकठाभरणे चैवं समुल्लेखः समुपलभ्यतेऽन्ते—

सूक्त्यैव तेषां भवभीरवो ये गृहाश्रमस्थाश्चरितात्मधर्माः ।
त एव शेषाश्रमिणां सहायधन्याः स्युराशाधरसूरिवर्याः ॥

एतैः प्रमाणैरस्याशाधरशिष्यत्वं सुष्ठु प्रतीयते। श्रीमदाशाधरसूरिवर्यस्य विक्रमनृपस्य त्रयोदशशताब्दौ समुत्पादो व्यक्तं निर्णीत एवातोऽस्य कवेरपि स एव समुत्पत्तिकाल इति निर्विवादप्रायमेवेति विदांकुर्वन्तु सज्जनाः पाठकाः ।

कविवरस्यास्य पुरुदेवचंपूप्रबंधवत् मुनिसुव्रतकाव्यं, भव्यजनकंठाभरणमित्यपरं कृतिद्वयं च समुपलभ्यते । मुनिसुव्रतकाव्ये विंशतितमतीर्थंकरस्य चरितं पंचशतश्लोकैर्नितरां मनोरमं वर्णितं । एतत्काव्यं चंद्रप्रभचरितततोपि सुरसतरं वर्तते। अस्य मुद्रणे च साहित्यप्रकाशनपरैः दत्तचित्तैर्भवितव्यम् । भव्यजनकंठाभरणे च देवशास्त्रगुरूणां तौलनिकपद्धत्या विमर्शं कृत्वा परमार्थत्वं जैनमत एव तेषां भवितुमर्हतीति विवेचितं। मद्यमांसमधूना हेयता युक्तियुक्तवचनैर्निर्दिश्य सम्यग्दर्शनस्य अष्टांगवर्णनं तदुदाहरणोपेतं सम्यक्प्रकीर्तितं कविना। इति ग्रंथत्रयमस्माकं दृष्टिपथमद्यावधिसमागतं तेन अस्य कवेः कवित्वं विद्वच्चेतश्चमत्कारीति निर्णीयतेऽस्माभिः। जैनशास्त्रमुद्रणाभिलाषवद्भिरिमौ द्वावपि ग्रंथौ प्रकाशयित्वा जैन साहित्यप्रभावनां क्रियतामिति विज्ञप्तिं कृत्वा विरम्यते भूमिका लेखनात् इति शम् ।

वीरसंवत् २४५४
चैत्रकृष्णाप्रतिपत्

भवदीयवशंवदो
फडकुलेत्युपाह्वः पार्श्वनाथतनयो जिनदासः

श्रीः

महाकविश्रीमदर्हद्दासविरचिता

# पुरुदेवचंपूः ।

क्रियाद्वः कल्याणं भ्रमरहितसामोदसुमनः-
समासेव्यः श्रीमानृषभ इति विद्वत्सु विदितः ॥
ददानः कल्पद्रुः श्रितजनततेरुत्तमफलं
समासीनो दिव्यध्वनिमृदुलतालंकृतमुखः ॥१॥
जीयादादिजिनेन्द्रवासरमणिः सच्चक्रसंतोषकः ।
राजच्छोभनखाश्रयप्रविलसत्पादस्तमोनाशनः ॥
श्रीमान्वासवशोभितामरसभाहर्षप्रकर्षप्रदो ।
भ्राजत्केवलबोधवासररुचिर्निस्सीमसौख्योदयः ॥२॥

---

१ प्रथमतीर्थंकरपक्षे ' भ्रम-रहितसामोदसुमनःसमासेव्यः ' विपर्ययज्ञानरहितसहर्षदेवैर्विद्वद्भिः—गणधरादिमुनिभिश्च सेवनीयः । कल्पतरुपक्षे भृंगहितैः सुगंधिपुष्पैः समासेव्यः । ' सुगंधिमुदि वाऽमोदः ' ' सुमनाः पुष्पमालत्योः स्त्रिया धीरे सुरे पुमान् ' इति विश्वलोचनः । आदितीर्थंकरो ' दिव्यध्वनिमृदुलतालंकृतमुखः ' दिव्यध्वनेः कोमलतया भूषितमुखः । कल्पतरुश्च ' दिव्यध्वनिमृदु-लतालंकृतमुखः ' दिवि-स्वर्गे अध्वनि-मार्गे इत्यर्थः, कोमलवल्ल्या भूषिताग्रः । २ मोक्षफलं, जनेप्सितभाजनवस्त्रभूषणादिकं च । ३ जिनेशपक्षे सतां चक्रः समूहः सज्जनसमुदायः । सूर्यपक्षे चक्रवाकपक्षिणा हर्षप्रदः । ' अथ पुंस्येव चक्रः स्याच्चक्रवाकसमूहयोः । इति विश्वलोचनः । ४ जिनपक्षे दीप्तिसौंदर्याभ्यां युतानां नखानामाश्रयेण शोभमानचरणः । सूर्यपक्षे दीप्तिसौंदर्यवतः खस्य आकाशस्य अवलंबनेन विलसत्किरणः; ' पादा रश्म्यंघ्रितुर्यांशा ' इत्यमरः । ५ जिनपक्षे इन्द्रशोभितदेवसमूहहर्षप्रकर्षप्रदः । सूर्यपक्षे आसवशोभि-तामरस-भा हर्षप्रकर्षप्रदः मकरंदशोभिकमलकान्तिविकासप्रदः ।

जीवं[1] जीवं प्रति कलयितुं नित्यसौख्यं प्रवृत्तः ॥
श्रीमानाद्यो जिनपतिशशी संगतानंतसौख्यः
भव्योल्हासं वितरतु सभोल्लासकृत्सुप्रतिष्ठः
प्रौढध्वांत[2]स्फुरणहरणः सत्पथे[3] सन्निविष्टः ॥३॥
विशासितकुशासनं[4] विविधबंधविच्छेदनं
जिनाधिपतिशासनं जयति भव्यसंमाननम् ॥
कुतीर्थिकरवासनाकुलितचित्तसंत्रासनं
सतां सुगुण[5]शासनं सकलमंगलाशंसनम्[6] ॥ ४ ॥
रत्नत्रय राजति जैत्र[7]मन्त्रमचिंत्यदिव्याद्भुतशक्तियुक्तं ॥
मोहक्ष्मावल्लभगुप्तसेनां[8] जिगाय तां येन जिनाधिराजः॥५॥
वाणीं मे प्रथयन्तु ते गणधराः सज्ज्ञानवाराकराः[9]
येषां निर्मल[10]मानसे श्रुतमयी[11] हंसी सदा खेलति ॥
स्याद्वादोत्तमपक्ष[12]युग्जिनपतेर्वक्त्रांबुजान्निर्गता
मिथ्यैकांतमृणालकांडनिचयं द्राक् खंडशः कुर्वती ॥ ६ ॥

---

१ जिनपक्षे प्राणिनं प्राणिनं प्रति । चंद्रपक्षे चकोरं प्रति 'जीवजीवं-चकोरकः' इत्यमरः। २ ध्वांतं तमः अज्ञानं च ३ सज्जनानां मार्गे। चंद्रपक्षे सतां शोभनानां पथाः मार्गः अर्थात् नक्षत्रमार्गे नभसीत्यर्थः। ४ निरस्तमिथ्यामतं । ५ सम्यग्दर्शनादिशोभनगुणानामुपदेष्टृ । ६ सकलमंगलसंपादकम् । ७ जयशीलं । ८ मोहनृपतिपरिपालितां कर्मसेनां ।९ ज्ञानसमुद्राः । १० निर्मलचित्ते, मान-सरोवरे च । ११ द्वादशांगरूपा। १२ इयं द्वादशांगरूपा हंसी स्याद्वादरूपपक्षसंयुक्ता जिनवदनकमलनिर्गता सती सर्वथैकान्तकमलनालं शीघ्रं खंडयति । येषां चतुर्ज्ञानजलधीनां गणधराणां मानससरसि इयं हंसी अनिशं क्रीडति ते मम वाणीं वर्द्धयन्तु इति श्लोकाभिप्रायः ।

श्रुतस्कंधोद्दंचत्तरुरधिकशाखालिसितं ।
स्तुमो यस्य स्थानं जिनपवदनोद्यानमनघं ॥
दृगंभोजोपेतं स्मितमधुरहंसाढ्यमधर-।
प्रवालं नीलभ्रूमरुकमुदयद्रूपकालितं ॥ ७ ॥
कल्याणं कलयन्तु पूर्वकवयः पीयूपकल्लोलिनी-
सल्लापिप्रथमानकोमलवचोगारा. स्फुरत्कीर्तय· ॥
यैरादीश्वरसत्कथामृतझरी नीता प्रकाशं पर
संसारोद्भवतापमप्रतिहतं लोपं नयंत्ययंततः ॥ ८ ॥
आदीश्वरोदारकथारसज्ञा स्तुतिं गुरूणां तनुतां रसज्ञा ॥
येषां कथाक्षामृतसेचनेन सुपुष्पिताऽभून्मम सूक्तिवल्ली ॥९।
जयंतु श्रीमंतः प्रथितजिनसेनार्यगुरवः
प्रवादिप्रागल्भ्योद्धुरशिखरदंभोलिपटवः ॥
दलन्मल्लीवल्लीकुसुमरससौरभ्यलहरी-
मुचा वाचा मोचाफलमधुरचौर्यैकचतुराः ॥ १० ॥
श्रीमद्गौतमनामधेयगणभृत्प्रोवाच यां निर्मलां ॥
ख्यातश्रेणिकभूभृते जिनपतेराद्यस्य रम्यां कथां ।

---

१ अथ श्रुतस्कंधरूपो महास्तरुद्वादशांगचतुर्दशपूर्वशाखाभियुतोऽस्माभि स्तूयते । अस्य तरोरुत्पत्तिर्दोषरहिताज्जिनमुखोपवनाजाता जिननेत्रयोः कमलरूपत्वात्, तस्मितस्य कलहंसत्वात्, तदधरोष्ठस्य, किसलयत्वात्, तद्भ्रूयुगमस्य मरुकत्वात् (मरवा इति महाराष्ट्रभाषायां) जिनपवदनमिदं उद्यानमेवेति रूपकालंकारः । २ कुर्वन्तु । ३ अमृतस्य नदी। ४ जिव्हा 'रसज्ञा रसना जिव्हा इत्यमरः । ५ दंभोलिर्वज्रं । ६ रंभाफल 'कदली वारणबुसा रंभा मोचांशुमत्फलेत्यमरः' ।

तां भक्त्यैव चिकीर्षतो मम कृतिश्चंपूप्रबंधात्मिका ।
वेलातीतकुतूहलाय[1] विदुषामाकल्पमाकल्पताम्[2] ॥ ११ ॥
जातेयं कवितालता भगवतो भक्त्याख्यवीजेन मे
चंचत्कोमलचारुशब्दनिचयैः पत्रैः प्रकामोज्ज्वला[4] ॥
वृत्तैः[5] पल्लविता ततः कुसुमितालंकारविच्छित्तिभिः ॥
संप्राप्ता वृषभेशकल्पकतरुं[3] व्यंग्यश्रिया वर्धते ॥ १२ ॥

अथ विशालवीचिमालाविक्षिप्तविविधमौक्तिकपुंजसंजातमरालि-कांभ्रमसमागतदृढालिंगनमंगलतरंगितकौतुकमराललोकविराजिततीरेण लवणाकरेण परिवृते, अधःस्थितकुंडलीन्द्रमृणालदंडमंडिततया, घननीलगगनतलोलंवचुंवितकांचनगिरिकर्णिकतया च लक्ष्मीनिवासभूतलवणोदधिमध्यसंजातमंजुलकंजसंभावनासंपादके जंबुद्वीपे विराजमानस्य लवणतरंगिणीरमणपयोमयस्नेहपरीतजंबूद्वीपभाजनमध्यप्ररूढदीपकलिकाशंकाकरस्य धराधरस्य प्रत्यग्दिशाश्रिते, फलशालिशालीवनोपांतमनुपतंतीभिस्तद्विषयवास्तव्यनानानोकहशाखाशिखासमुद्धूतसमीरसमाकृष्टसुरापगागलितशैवालमालाभिरिव, समुन्नततरुतरुणसमालिंगितनभोलक्ष्मीवक्षःस्थलत्रुटितोज्झितमरकतमयमालामणिश्रेणिभिरिव, तद्देशमध्यस्थलालंकारभूतविजयार्धशिखरिसुरदान्तिसमुद्रस्ततुंगतमशृंगहस्त-

---

१ मर्यादातीतकौतुकाय । २ कल्पान्तकालपर्यंतमित्यर्थः । ३ वृषभतीर्थंकरस्य । ४ अतिशयेन उज्ज्वला कांत्याख्येन काव्यगुणेन सहिता । ५ वृत्तैः वसन्ततिलकादिछंदोभिः । ६ हंसी । ७ कुंडलिनां सर्पाणां इन्द्रः अधिपतिः शेष इत्यर्थः । ८ के वारिणि जायते इति कजं कमलमित्यर्थः। क्षेत्रच्छदैः पूर्वविदेहमुख्यैरधःस्थितस्फारफणीन्द्रदंडः । यत्रास्ति रुक्माचलकर्णिको यः सद्म श्रियः पद्म इवाब्धिमध्ये ॥ इति धर्मशर्माभ्युदयस्य श्लोकच्छायामनुसरति गद्यमिदं । ९ समुद्रः । १० पश्चिमदिगाश्रिते ११ अनोकहो वृक्षः । १२ देवगंगा ।

निर्मूलितांतरिक्षाकूपारपद्मिनीहरितपत्रमालाभिरिव शुकपंक्तिभिः सदानीतवदनमाले, सकलगीर्वाणपरिषन्नयनपरितोषमूले, आलेख्यालिखितैरिव निश्चलांगैः कुरंगैः संततसंश्रूयमाणगानकलाप्रवीणसस्यस्थलीपालकबालस्त्रैणनिराकृताभिः, पुनस्तदीयनयनमीनभ्रान्त्या प्रतिनिवृत्ताभिर्गगनकाननच्युतपुष्पमंजरीभिरिव समापतन्तीभिर्बकावलीभिःप्रकल्पसकेतनजाले, निरालम्बतया नभोंगणनिपतितस्वर्गैकगडसंदेहविषये वाधिलविषये, बाभासमानस्यानेकप्रस्थकलितस्याप्यतीतमानस्य, प्रसूतानेकपादस्यापि नगेंद्रस्य, विचित्रवनराजिविराजितस्यापि समाश्रितविद्याधरवनितानामवनस्य रविं दधानस्याप्यरविंदधानस्य, सुरभिवनकुसुमविसरविसृतरजोभरपरिमलितस्यापि अत्युज्ज्वलस्य, महीमहिलाविधृतदुकूलचेलस्येव, भगवदर्हद्विमलकीर्तिपुंजस्येव, व्योमचरवनितावदनविधुविलीनचंद्रकांतशिलात-

---

१ नभःसमुद्रः। २ अत्र गद्यांशः 'सस्यस्थलीपालकबालिकानामुल्लोलगीतश्रुतिनिश्चलांगाः ॥ यत्रैणयूथं पथि पान्थसार्थाः सश्लेष्यलीलामयमामनन्ति ॥ धर्मशर्माभ्युदयस्यमिमं श्लोकभाव अनुसरति। ३ ध्वजसमूहे। ४ धान्यादेः परिमाणविशेषैः युक्तस्यापि तद्रहितस्येति विरोधः। तत्परिहारस्तु-प्रस्थैः शिखरैर्युक्तस्य तथा अत्युच्चत्वात्प्रमाणरहितस्य। ५ प्रादुर्भूतानेकचरणस्यापि नगेंद्रस्य न गच्छता वृद्धस्येति विरोधः। परिहारस्त्वेव प्रसूतानेकप्रत्यन्तपर्वतस्य तथा पर्वतश्रेष्ठस्य 'पादाः प्रत्यन्तपर्वताः'। ६ वनराजिविराजितस्यापि अवनस्येति विरोधः। तत्परिहारस्त्वेव अवनस्य रक्षकस्येत्यर्थः। ७ रविं दधानस्यापि अरविंदधानस्येति विरोधः परिहारस्त्वेव रविं सूर्यं धारयतस्तथा अरविंदधानस्य अरविंदाना कमलाना धाति इति अरविंदधानस्तस्य। ८ रजोभरपरिमलितस्यापि अत्युज्ज्वलस्येति विरोधः परिहारस्त्वेव परागभरयुक्तस्य तथा अतिशयेन प्रकाशमानस्य। अत्र विरोधाभासरूपो गद्यांशः 'प्रस्थैरुदस्थैः कलितोऽप्यमानः पादैरमंदैः प्रसृतोऽप्यगेंद्रः युक्तो वनैरप्यवनः श्रितानां यः प्राणिनां सत्यमगम्यरूपः॥' इमं धर्मशर्माभ्युदयस्थश्लोकमनुसरति।

लविगलद्वारिधाराभिर्भेदगंधवहकदलस्पंदनांदोलितमाकंदतरुसंदोहशिख-रच्युतपक्वफलप्रसृतरसधोरणीभिः पफुल्यमानमल्लिकातल्लजमंजरीसजरी-जृंभमाणमकरंदभ्रंगीभिर्गगनचरललनाजनकुलकलितकलगानकलाकालवि-धृतमाणिशिलातलविसृतस्रवन्तीभिश्च निरंतरोपत्यकाभागस्य नैजकांतिक-ल्लोलपरिहसितकुलाचलस्य रजताचलस्योत्तरश्रेण्यामलकाभिधाना पुरी परिवर्तिता ॥

मदीयरत्नप्रचयं महार्घमाहृत्य सर्वं क्व नु गच्छसीति ॥
रुषा पयोराशिरिवागतोऽद्य यस्याः समीपे परिखा समिंच्छे। १३

यदीयकनकोज्ज्वलप्रथितसालमालाभितो
विभाति नगरश्रिया विधृतकांचनक्षौमवत् ॥
नभश्चरवसुंधरारमणराज्यलक्ष्म्याः पुन.
परीतनवहाटकप्रचुरकांडवत्सालिवत् ॥ १४ ॥

यस्याः शारदनीरदामलमहाहर्म्यावलिप्रोल्लसत्—
प्रख्यातांबुजरागरत्नखचितैर्वातायनैर्विस्तृतैः ॥
मार्तंडाधिककांतिभिर्धुतदिनीपाथोजचक्रांगनाः
रात्रौ मेलनाविप्रयोगाविषयव्युत्पत्तिशून्याःकृताः॥१५॥

यत्र च पूजोत्सवमंगलतरागीतदुंदुभिमंदतमनिध्वानानिर्भरेण, पिकनायकमदनिर्मूलननिदानललनाजनकलगीतकलाकल्लोलपल्लवितवल्ल-कीक्वणितकमनीयेन, विद्याधरजनकलितलास्यवेलाचालितरसनादामसमंजु-मंजीररवमेदुरेण, तत्समाकर्णनवेलादोलायमानसंगीतविद्यापारीणविद्या-धरमुकुटतटघटितमालाजालोच्चालितचंचरीकसंचयसमकल्पितझंकारमनोह-रेण उत्सवकोलाहलेन जागरूकेव लक्ष्मीरालक्ष्यते ॥

---

१ अहं एव तर्कयामीत्यर्थः। २ पद्मरागमणिः। ३ मेखला, कटि-भूषण। ४ नूपुरं। ५ भृंगः।

द्विविधाः सुदृशो[1] भांति यत्र मुक्तोपमाः[2] स्थिताः ॥
राजहंसाश्च[3] सरसां[4] तरंगविभवाश्रिताः ॥१६॥

या खलु घन[5]श्रीसंपन्ना निभृतसामोद[6]सुमनोभिरामा सकलसुदृग्भिः शिरसा श्लाघ्यमानमहिममहिता विविधविचित्रविशोभित[7]मालाढ्या अलकाभिधानमर्हति ॥

अलकाभिख्यया[8] जुष्टा विकचाब्जसरोमुखी ॥
निरतमस्काऽपि या चित्रमुत्तमस्फुरणोज्ज्वला ॥१७॥
शास्ता तस्याः सकलखचरक्ष्मा[9]पकोटीरकोटी-
खेलन्मालासदृशविलसच्छासनः संबभूव ॥
धीरः श्रीमानतिबल इति ख्यातनामा खगेंद्रः
प्रख्यातश्रीर्निजकुलमहामेरुमंदारशाखी ॥ १८ ॥
गंगीयंति सदा समस्तसरितो रौप्याचलंत्यद्रयो

---

१ सुष्टु दृशी यासा ताः सुदृशः ललनाः । सुष्टु दृग्दर्शन येषा ते सुदृशः सम्यग्दर्शनसपन्नाः । २ अनुपमाः मौक्तिकोपमाश्च । ३ कलहसाः, नृपोत्तमाश्च । राजहंसस्तु कादंबे कलहंसे नृपोत्तमे ' इति विश्वलोचनः । ४ सरसा तरगविभवाश्रिताः। नृपश्रेष्ठाः सस्नेहमनसो वैभवयुक्ता. कलहसाश्च सरोवराणा लहरीवैभवसयुक्ताः। ५ विपुलसपदापेता, मेघकान्तिसपन्नाश्च । ६ सानदैर्विद्वद्भी रमणीया, सुगधिपुष्पै रमणीयाश्च । ७ विविधैर्विचित्रैर्विभि' पक्षिभिः शोभिनो ये तमालतरवः तैराढ्या, केशपक्षे विविध विचित्रविशोभितपुष्पहारसपन्नाः । ८ कमलसरोवदना या नगरी अलका [ अलकाश्चूर्णकुन्तलाः ] इति नाम्ना युक्तापि विकचा केशरहिता इति विरोधः, परिहारस्तु अलका इति नामधारिणी या पुरी प्रोत्फुल्लकमल युक्तसरोमुखी विराजते । तथा तमोरहितापि यालका नगरी उत्कृष्टतमोबाहुल्येन प्रकाशसयुक्तेति चित्र, परिहारस्त्वेवं तमोरहिता या नगरी उद्गतं तमसः स्फुरण यस्याः एतादृशी अस्ति । ९ पृथ्वीपतिः ।

नीलाब्जानि सिताम्बुजंति गजता जंभारिकुंभीयति ॥
चंद्रत्यंबुजबांधवः पिककुलं लीलामरालायते ॥
कर्पूरंति च कज्जलानि विलसद्यत्कीर्तिसंघट्टतः ॥ १९ ॥
यदीयकीर्तिकल्लोलैर्विश्वस्मिन्विशदीकृते ॥
वैरिस्त्रीवदनाब्जानि मलिनानि बताभवन् ॥ २० ॥
यस्य प्रतापतपनेन विलीयमाने
लेखाचले रजतलिप्तधराधरे च ॥
यत्कीर्तिशीतलसुपर्वनदीतरंगै-
रंगीकृतौ सपदि तौ स्थिरतामयाताम् ॥ २१ ॥
रामा मनोहरानामा बभूव वसुधापतेः
सौंदर्यसिंधुलहरीमदनिर्धूममंजरी ॥ २२ ॥

यस्या किल मृदुलपदयुगलं गमनकलाविलासतिरस्कृतहंसकमपि विश्वस्तलालितहंसकं, विद्रुमशोभाचितमपि पल्लविताशोकद्रुमशोभा-चितं, जंघायुगं च जंघालताविरहितमपि जंघालताविख्यातं,

१ गजानां समूहो गजता । २ जंभारिरिंद्रस्तस्य कुंभी करी ऐरावणः । ३ अंबुजबांधवः सूर्यः । ४ लेखानां देवानामचलो गिरिः मेरुरित्यर्थः । ५ देवनदी ' सुपर्वाणः सुमनसः ' इत्यमरः । ७ गद्येऽस्मिन्सर्वत्र विरोधाभासालंकारः । गतिविलासपराजितहंसकमपि मनोहरायाः पादयुग्मं लालितहंसकमिति विरोधः । परिहारोऽस्य तया गत्या हंसपक्षिणो पराभूतिं नीत्वा स्वपादयोः हंसकं मणिनूपुरं धृतमिति । ८ वृक्षाभावः पक्षे विद्रुमः प्रवालं ' विद्रुमः पुंसि प्रवालं पुंनपुंसकम् ' इत्यमरः । ९ जंघा-युगं तु प्रसृतायुगं तु ' जंघा तु प्रसृता ' इत्यमरः ( पोटरी इति महाराष्ट्र भाषायां ) जंघालताविरहितमपि जंघालताविख्यात इति विरोधः, तत्प-रिहारस्त्वेवं तस्या जंघायुगं शीघ्रगामित्वेन रहितं तथा लतावत्कोमलत्वात् जंघालतात्वेन प्रसिद्धं ( जंघा लतेवेति जंघालता )।

ऊरुद्वयं तु रंभासमानमप्यरं भासमान, मध्य पुनस्तनुसंगतमपि अतनुसंगतं, स्तनमंडलं तु विवेकवार्तापरिहीनमपि क्षमाधरकलितविद्वेषमपि सुवृत्तशोभितं, न मत्सरमपि कुम्भीन्द्रकुंभयुगमे समत्सर, कंठतलं च धूतदरमपि कांतमहादरविराजित, कोमलाधरबिंब पुनर्बहुरागरंजितमपि तिरस्कृतपल्लव, नवसुधारसोज्ज्वलमपि वसुधारसोज्ज्वलम्, विशालनयनद्वंद्व कर्णप्रणयपरीतमपि कृष्णार्जुनरुचिमेदुर, मुखकमलं

---

१ ऊर्वोर्युग सक्थ्योर्युग रंभासमानमपि कदलीस्तम्भसदृशमपि तथा नेति विरोधः। परिहारस्त्वेवं कदलीस्तंभसममपि ततोऽपि अधिक भासमान। २ तनुसंगतमपि शरीरसंगतमपि तथा नेति विरोधस्तत्परिहारस्त्वेव, अतनुर्मदनः तेन संगतम्। ३ स्तनमंडलं विवेकवार्ताविहीनमपि विचाररहितमपि क्षमाधरेण सह कृतद्वेषमपि सुवृत्तशोभित सदाचरणशोभितमिति विरोधः। तत्परिहारस्त्वेव, अतिपीनत्वात्परस्परसंसक्त अत्युच्चत्वात्क्षमाधरमपि गिरिमपि अतिशायि, तत्स्तनमंडल वर्तुलत्वेन शोभितं॥ 'वृत्तस्तु वर्तुलेऽतीते मृते ख्याते दृढे धृते॥त्रिषु वृत्त तु चरिते वृत्त छंदसि वर्तते' इति विश्वलोचनः॥ ४ यत्स्तनद्वद्वं करिकुंभयुगे न मत्सरमपि समत्सरमिति विरुद्ध, तत्परिहारः नमन्सरो हारः यत्र इत्यभिप्रायेण भवति। करिकुंभयुग्मतोऽपि नयनमनोहरत्वादुच्चैस्त्वाच्च समत्सरमिति भावः। ५ धूतदरमपि तिरस्कृतशंखमपि कंठतलं कांतमहादरविराजित शोभनमहाशंखसुदरमिति विरोधः। परिहारस्त्वेव तस्याः कंठतलं तिरस्कृतशंखं निजपतिमहानुरागविराजित चेति विरोधपरिहारः। ६ अधरस्तु बहुलौहित्येन युक्तोऽतः तिरस्कृतकोमलकिसलयकान्तिरथवा तिरस्कृतालक्तकरागः॥ 'पल्लवो विस्तरे खड्गे शृंगारालक्तकरागयोः'॥ इति विश्वलोचनः। १७ विशालनयनद्वद्व कर्णस्नेहयुक्त सदपि वासुदेवार्जुनप्रीतियुक्तमिति विरोधः एव परिन्हियते।अस्या नेत्रौ श्रोत्रस्नेहपरायणौ आकर्णदीर्घौ तथा श्यामश्वेतकांतिव्याप्तौ। 'कर्णः श्रोत्रे पृथासुते' इति विश्वलो०।

पुनः कृतराजविद्वेषमपि राजोल्लासमादधानं, भोगहितमपि नभोगहित विरराज ॥

महाबलख्यातसुतस्तयोरभून्महोदयः सर्वकलासु कोविदः ।
सुतेषु भिन्नेष्वपि सत्सु यन्मयी प्रमोदवल्ली ववृधे महीपतेः ॥२३॥

कलासरणिलासिकाविविधलास्यरंगस्थली-
निकाशरसनांचलो निखिलकोविदोल्लासकः ॥
यशःकुसुममाधुरीप्रमुदितामरीभ्रमरी-
स्वरप्रसरपूरितत्रिभुवनः कुमारो बभौ ॥ २४ ॥

कलाविलाससदनं कांतिकेलिनिकेतनं ।
महाबल इति ख्यातं मूर्तं तेजो व्यजृंभत ॥ २५ ॥

नभश्चरधरापतिरतदनु यौवराज्ये पदे
कुमारमिममादिशत्कमलबंधुकल्पप्रभं ।
नृपे नृपसुते तदा पृथगवस्थिता श्रीर्बभौ ।
हिमाद्रिकटके पयोनिधिजले च गंगा यथा ॥ २६ ॥

अथ कदाचन व्योमचरवसुधाधिपतिः संसारविषयसंजातनिर्वेग. प्रस्थितानादिकर्मबीजप्ररोहप्ररूढकांडां, जननादिकुसुमकोरकितां, व्यसनफलविलसितामनुभूत्कर्दमकल्लोलैश्चुंबितां संसारवल्लरीं ध्यानकुठारेण निर्मूलयितुकाम., कामपि चिंतां मनसा गाहमानः, तत्क्षणमेव महामंत्रि-

---

१ चंद्रेण विद्वेषं तनुते तथापि चंद्रमानंदयति इति विरोधे परिहा( एवं, चंद्रादपि अधिककांतिसंपन्न तथा राज्ञः अतिबलनृपतेः आनंदकरमिति।
२ नभसा गच्छति इति नभोगः अतिबलो विद्याधरनृपतिस्तस्य हितकरं ।
३ नर्तकी । ४ जिह्वाप्रांतः। ५ विद्वन्मोदक' ६ भ्रमरी । ७ सानौ
८ समूहः । ९ भ्रमरः

मडलसामतमंत्रिहशुद्धातमुख्यजनेभ्यो निवेदितनिजोदन्तः, समस्त-दिगतविकासितललितयशोविलसितलतांतीय, प्रकृतिजनमनःकुमुद-कुमुदिनीकांताय, सकललोकलोचनानंदाय महाबलाय अभिषेकपुरःसर प्रतिपादितराज्यभारो व्यपेतबंधन इव गंधसिंधुरः क्रमेण निजमंदिरान्निर्गत्य, विद्याधरवसुमतीवल्लभैरनुगम्यमानः संसारदुःखशमनदक्षा जैनीं दीक्षामासाद्य सुचिरं तपश्चचार॥

ततो धीरोदारः सकलखगभूमीशमकुटी-<br>
तटीप्रोद्यद्रत्नप्रतिफलितपादांबुजयुगः।<br>
दधे दोष्णा राज्यश्रियमतिबलस्यात्मजवर<br>
प्रजारक्षादक्षः सकलगुणसंकेतसदन ॥ २७ ॥

यस्मिन्महीपाले महीलोकलोकोत्तरप्रमादर्शितकुंभमयस्तंभायमानेन निजभुजेन धरणीमगदनिर्विशेषमाबिभ्राणे, बंधनस्थितिः कुसुमेषु चित्रकाव्येषु च, अलंकाराश्रायता महाकविकाव्येषु कामिनीजनेषु च, घनमलिनांबरता प्रावृषेण्यदिवसेषु कृष्णपक्षनिशासु च, परमोहप्रतिपादन

---

१ लतांत कुसुम। २ चंद्राय। ३ पृथ्वीपतिभिः। ४ धारश्चासौ उदारश्च पंडितो दाता च। ५ दोष्णा भुजेन 'भुजबाहू प्रवेष्टो दोः' इत्यमरः। ६ सुवर्णनिर्मितस्तंभसदृशेन। ७ केयूर। ८ वृन्तस्थितिः पुष्पेषु, चक्रबंधादिबंधन चित्रकाव्येषु न तु तत्रत्यजनानां रज्ज्वादिबंधनं। ९ उपमाद्यलंकाराणां, केयूरादिभूषणानां च। तत्रत्यजनानां अलं अतिशयेन कारागृहे कदर्थनादिकं नेति भावः। १० मेघश्यामाकाशत्वं वर्षाकाले निबिडतमोयुक्ताकाशत्वं च कृष्णपक्षयामिनीषु। न तत्रत्या जनाः मलिनवस्त्रधारिणः। 'अम्बरं व्योम्नि वाससीत्यमरः'। ११ प्रमाणशास्त्रेषु न्यायशास्त्रेषु परम-ऊहप्रतिपादनं अतिशयेन तर्कस्वरूपवर्णनं. ललनाजनगात्रेषु च पर-मोहोत्पादनधर्म आसीत्।

प्रमाणशास्त्रेषु युवतिजनमनोहरांगेषु च, शुभकरवालशून्यता कोदंड-
धारिषु कच्छपेषु च परं व्यवतिष्ठत ॥

येन पाणौ गृहीतापि समरे समरेखिका ॥
परेषामादधे चित्रं कर्णालिंगनमंगलम् ॥ २८ ॥
नृतंत्यां यस्य हस्ताब्दे समरे खड्गविद्युति ॥
शत्रुस्त्रीनयनांतेषु चित्रं वृष्टिरजायत ॥ २९ ॥

तदनु सकलदिक्सुंदरीसंदोहमणिमुकुरायमाणप्रतापदिनकरोदयपूर्वशिख-
रिशिखरायमाणभुजदंडस्य बलोद्दंडस्य महाबलमहीपालप्रकांडस्य पीयू-
षरस इव सागरस्य, चंद्रोदय इव प्रदोषस्य, वसंतसमय इव कुसुमारा-
मस्य, सुरचापोद्गम इव जलधरसमयस्य, कुसुमप्रसव इव कल्पपादपस्य,
सूर्योदय इव सारसवनस्य, कलाप इव कलापितरुणस्य, यौवनारंभः
प्रादुरास ॥

---

१ धनुर्धारिषु खड्गशून्यता, कच्छपेषु कूर्मेषु बालशून्यता रोमराहित्य। तत्रत्य जनानां शुभकरयोः अपत्यशून्यता नासीत्। २ येन महाबलनृपेण पाणौ गृहीता करे धृता पक्षे विवाहिता समरेखिका खड्गः समरे युद्धे परेषां शत्रूणां कर्णालिंगनमंगलं कर्णाश्लेषसुखं जनयति इति आश्चर्यं। महाबलेन राज्ञा ऊढा अन्येभ्यः आलिंगनसुखं विदधाति इति आश्चर्य, विरोधपरिहारस्त्वेवं, अनेन राज्ञा धृतः खड्गः समरे शत्रूणां कर्णमालिंगति अर्थात् तेषां कंठप्रदेशे पतित्वा तान्व्यापादयति इत्यर्थः। ३ युद्धे यस्य नृपतेः कररूपे मेघे खड्गरूपायां शंपायां नृत्यमातन्वत्यां सत्यां शत्रुललनानेत्रसमीपप्रदेशेषु वृष्टिरजायतेति आश्चर्यं यत्र विद्युद्विद्योतते तत्र वृष्टिभवनं उचितं परमन्यत्र वृष्टिभवनं आश्चर्यावहं। भावस्त्वयं अनेन नरेंद्रेण खड्गेन रिपवो मारिता अतो हेतो रिपुस्त्रियो रोदनं कुर्वन्ति। ४ प्रदोषो रजनीमुखं। ५ कमलवनस्य।

तदा तादृग्रूपं प्रकटमभवत्खेचरपतेः
यदालोक्य व्रीलत्तनुमसमबाणोऽपि विजहौ ।
नभोगस्त्रीनेत्रभ्रमरनिकराकर्षणकला-
धुरीणं यत्प्रोद्यत्तरुणिमसुमामोदसुरभि ॥ ३० ॥
खेचरीचित्तलोहानामयस्कांतशलाकिका ।
तस्य प्रजाभागधेयं रूपधेर्यमजृंभत ॥ ३१ ॥

तस्य च राज्ञो निखिलकलावगाहगंभीरबुद्धयो. नीतिशास्त्रपारावार-दृश्वानः, सकलभुवनराज्यभारार्णवकर्णधारा., कृच्छ्रेष्वपि कार्यसंकटेषु प्रसन्नमतिविभवाः धामानि धैर्यस्य, स्थानानि स्थैर्यस्य, सेतवः सत्यस्य, प्रवाहाः करुणारसस्य, विहारसदनानि राजभक्तेः, सागराः प्रजासंतोषामृतस्य, निर्भरमुपरूढप्रेमरसा महामति-संभिन्नमति-शतमति-स्वयंबुद्धनामानश्चत्वारः सचिवाः सबभूवुः ॥

समस्तशास्त्ररत्नानां निस्तुल्यनिकषोपलः ॥
स्वयंबुद्धोऽभवत्तेषु सम्यग्दर्शनशुद्धधीः ॥ ३४ ॥
खगानां राजापि प्रशमितविपक्षव्रजतया
गताशंकातंकः सकलखचरश्लाघ्यमहिमा ॥
अमात्येषु न्यस्तक्षितिवलयभारोऽनुबुभुजे ॥
निजस्त्रीभिः साकं खगसमुचितान्भोगविभवान् ॥३५॥

---

१ मदनः । २ विद्याधरललनाः ३ लोहचुम्बकसूची । ४ सौंदर्यं । ५ अय महाबलो भूपालः खगाना पक्षिणां राजापि भूत्वा गरुडोऽपि भूत्वा प्रशमितविपक्षव्रजतया गताशंकातंकः प्रणाशितपक्षिनक्षसमूहतया भयव्यथारहितोऽभवदिति विरोधः । परिहारस्त्वेवं खेचराणा अधिपो भूत्वा प्रशमितारिसमूहः सन्भयव्यथाहीनोऽभूत् ।

अबला[1]ढ्योऽपि भूपालो दिक्षु ख्यातमहाबलः ॥
नभोगोऽपि स्वयं भोगान्विविधान्बुभुजे चिरं ॥ ३६ ॥

तथाहि कदाचिदसौ महाबलमहीपालो मंदेतरमदारवनवाटीपर्यटनसुरभिलमदानिलचालितस्तनशाटीनां वधूटीनां चंदनरसच्छटाभिरिव स्मितसुधाकान्तिझर्गाभिरभिषिच्यमानः, कर्णपूरीकृतनीलोत्पलैरिव नयननिर्गलद्रोचिर्वीचिभिस्ताड्यमानः, कुंकुमवासधूलिभिरिव मणिभूषणगणकमनीयकान्तिकल्लोलैः पल्लवितांगः, कोमलकुसुमकुलैरिव नखमयूखजालकैरवकीर्यमाणः, चम्पकदामभिरिव भुजलताभिरावध्यमानश्चिर रजतमहीधरे महारंजतमहीध्र इवामर्त्यपतिर्विजहार ॥

विचित्रनानावादित्रनादनादितदिक्तटः ॥
जागुचित्तस्य वत्रुधे वर्षेट्ठाद्धिमहोत्सवः ॥ ३५ ॥

तदानीं खलु निखिलगगनचरमणिमकुटमकरिकानिकर्षणरेखाविलसितपदकमलयुगल, अनेकरत्नाभरणकिरणजालकांतरितावयव, इन्द्रायुधसहस्रसञ्छादितमिव कनकशिखरिणि, धैर्यगुणविजिते सेवार्थमागत इव हेमाचलशृंगे तुंगतममंगलसिंहासने समासीन, निजवदनवारिजविजयपराभवप्रणत इव शशिबिंबे स्फटिकमणिपीठे विन्यस्तवामपाद, मंथरचारागनाकरपल्लवोल्लसितहेमचामरपवनविलोलविमलदुकूलांचल, अतिप्रचंडमंडलीकमहासामंतप्रधानमंत्रिपुरोहितान्तर्वंशिकादिपरिवारपरिवृत, आस्थानमंडप-

---

१ अबलैः बलरहितैर्नरैर्युक्तोऽपि नृपोऽय दिशासु विदितमहासामर्थ्योऽभवदिति विरोधः। परिहार एव—अबलाभिः स्त्रीभिः युक्तोऽय नृप आसीत्तथा सकलदिग्वलये महाबल इति नाम्ना विदितः। यो भोगो न भूत्वापि भोगान्भुज इति विरोधः। परिहारोयं—नभसा गच्छति इति नभोगः खेचरः। २ कुचांशुकाना ३ विजयार्धपर्वते। ४ सुवर्णमेरौ। ५ अमर्त्यानां देवानां पतिरिन्द्रः। ६ सघर्षण। ७ आच्छादितं। ८ इन्द्रधनुः।

गतप्रीतं महाबलक्षितिपतिमवलोक्य स्वयंबुद्धसचिवः प्रस्तावितधर्म-कथाप्रस्तावस्तत्प्रतिष्ठापनाय दृष्टश्रुतानुभूतार्थसंबंधिनीमिमां कथां व्यांजहार ॥

राजन् ! राजसमानवक्त्र भवतो वंशे विशाले पुरा ॥
खेंद्रोऽभूदरविंदनामविदितः प्रत्यर्थिदावानलः ॥
शास्तुस्तस्य पुरस्य तस्य विजयादेवी बभूव प्रिया ॥
कांत्या कोमलया निराकृतनगती राकेंदुबिंबानना ॥ ३६ ॥
तयोर्बभूवतुः पुत्रौ विद्याविशद्यशोभितौ ॥
आदिमो हरिचंद्रश्च कुरुविंदस्ततोऽपरः ॥ ३७ ॥

स खलु कदाचन खेचरकुंभिनीपतिर्बव्हारंभमरभाविजृंभितरौद्रध्यानाभिसंधानसंबद्धनिजनरकायुष्यः, प्रत्यासन्नमृतिर्दवपावकज्वालानिकाशदाहज्वरबाधां सोढुमक्षमतया पुण्यक्षयपरिणतनिजविद्यावैमुख्येन च दमितमदशक्तिदंतावल इवातिदीनदशामापन्नः, संतातरंगिणीतरंगालिंगितलता लताततिसुगंधितमंदारतरुसंदोहस्पंदमानमंदपवमानमुखोत्तरकुरुवनोद्देशविहरणाय स्पृहयालुः, निजाज्ञापरिपालननिस्तन्द्रेण हरिचंद्रेण तद्वनोद्देशप्रापणाय प्रेरितया गगनगामिनीविद्यया अपुण्यवशेन अनुपकारिण्यां दुर्वारदुःसहसंतापसंपन्नदेहः, कदाचित्कलिविश्लिष्टगोधिकावालधीविगलितशोणितबिंदुसंदोहसंपर्कशांतसंतापः, पापवशेन रुधिरवापीमज्जनमेव परमौषधं मन्यमानः तद्वापीकरणाय समाज्ञप्तेन कुरुविंदेन पापोद्रिक्तस्वान्तेन कारितायां कृत्रिमक्षतजवापिकायामतिसंतोषेण विहरमाणः,

१ इंदुसमवदन। २ अरिवनाग्निः। ३ पूर्णिमाचंद्रवदना। ४ पृथ्वी 'कुंभिनीलोर्वरा चोर्वी'। इत्यमरः। ५ संबद्धं। ६ करी। ७ सुगंधित। ८ मुसली गृहगोधिका पाल इति महाराष्ट्रभाषायां। ९ रक्तम्।

कृतगण्डूष. विज्ञातरुधिरकृतकभावः, क्रोधेन कुरुविंदवधाय वीतवेगस्तरसा मध्ये निपत्य निजासिधेनुकाविदीर्णहृदयो मृतिमाससाद ॥

एवं पापविपाकेन दुर्मृतिप्राप्तदुर्गतिः ॥
एष इत्यधुनाप्यत्र कथेयं स्मर्यते जनैः ॥ ३८ ॥

तथा भवद्दशाकाशचंडभानुर्दंडितारातिमंडल·प्रचंडतरभुजदंडो दंडो नाम व्योमचरपतिर्मणिमालिनामधेयं निजनंदनं यौवराज्ये नियोज्य, निरंतर-विविधान्भोगाननुभुंजानोऽपि तृप्तिमलभमानः, तीव्रसंक्लेशपरिणामसंकल्पित तिर्यगायुः, जीवितांतकालिकदुर्ध्यानवैभवविजृंभितदुर्मरणो निजभांडागारे समजायत महानजगरः ।

भवस्मरणसंभूतभांडागारमहादरः ॥
सोऽनुमेने निजं सूनुं तत्प्रवेशे न चापरं ॥

अन्येद्युरसौ मणिमालिनामा खेचरपतिरवधिज्ञानलोचनान्मुनिविकर्तना-द्विज्ञाताजगरोदंतः, पितृभक्त्या शयुं पुरोधाय "भवान् विषयासंगदोषवि-शेषेण कुयोनिं प्राप्तस्तद्विषयामिषमिदं किंपाकफलसंकाशं, तांबूलमिव संयोगाधीनरागसंपादकं, अंधकारमिव सन्मार्गनिरोधनं, स्याद्वादमतमिव परिहृतमतांतरं, तडिल्लताविलसितमिव चलाचलं, सुरशरासनमिव विचित्रं, दुस्त्याज्यमपि त्याज्यमेवेति" इति बोधयामास ।

---

१ कृतनिष्ठीवनः । २ छुरिका । छुरिकाचासिधेनुका' इत्यमरः । ३ विकर्तनः सूर्यः ४ अजगर । ५ यथा तांबूलं नागवल्लीदलचूर्णक्रमुकादिसंयोगाल्लौहित्यसंपादकं भवति तथैवैतद्विषयामिषं पुत्रकलत्रादिसंयोगे जाते सति प्रीतिमावहति । ६ तमो यथा कंटकरहितसन्मार्गं न दर्शयति प्रत्युत तत्प्रतिरोधकं भवति तथा अनेन विषयामिषेण मोक्षमार्गो निरुध्यते । ७ स्याद्वादमतं यथा मतांतराणि निराकरोति तथा इदमपि विवेकशक्तिं ह्रासयति । उक्तं च महापुराणे जिनसे-नाचार्यपादैरपि-तांबूलमिव संयोगादिदं रागविवर्धनं॥ अंधकारमिवोत्सर्पत्सन्मा-र्गस्य विरोधनं॥ जैनं मतमिव प्रायः परिभूतमतांतरम् ॥ तडिल्लसितवल्लोलं वैचित्र्यात्सुरचापवत् ॥ उपर्युक्तगद्यांशः इमां श्लोकसरणिमनुसरति ॥

ततस्तनयवाङ्मयप्रचुरशर्मधर्मामृतै-
र्निरस्तविषय५स्पृहः स खलु जीवितांते पुनः ॥
समाधिमरणं व्रजन्दिविजभूयमायातवान् ।
महर्द्धिपरिमंडितो महितदिव्यदेहोज्ज्वलः ॥ ४० ॥
अवधिज्ञानविज्ञातप्राग्भवः सुर आगतः
प्रादान्मणिमयीं मालां प्रपूज्य मणिमालिनम् ॥४१॥
सेयं माला मणिगणलसत्कांतिकल्लोलजाल-
व्याप्तप्रांता विलसति भवद्वक्षसि श्रीनितांते ॥
प्रालेयाद्रेः कटकनिकटे संपतंतीव गंगा ।
लक्ष्म्या लीलाहसितरुचिवत्कीर्तिवीजालिवच्च ॥४२॥

एवं पुरा भवदीयपितामहः शतबलो नाम विद्याधरक्षोणिविल्लभो राज्यलक्ष्मीं सुचिरमनुभवन्भवत्पितरि विन्यस्तसमस्तराज्यभारः सम्यग्दर्शनादिसंपन्नः सुध्यानेन त्यक्ततनुर्महेंद्रकल्पे सुराग्रणीः संजातः। स कदाचन कांचनशिखरिशिखरे नंदनवने मया सह खेलंत भवंत समीक्ष्य अपारस्नेहपूरितमानसो 'जैनधर्मं लोकोत्तराभ्युदयसाधनं कदापि न विस्मरेति' समादिदेश । तथा भवत्पितृपितामहोऽपि निखिलखेचरमुकुटराजिनीराजितचरणनीरज. सहस्रबलः शतबले सुते निक्षिप्तराज्यभारः जैनीं दीक्षामासाद्य तपोंशुप्रकाशप्रकाशितमहीवलयः क्रमेणोत्पन्नकेवलज्ञानः समागतसुरासुरादिभिरभ्यर्चितः शाश्वतं पदमुपजगाम ॥

तथा भवत्पिता धीरस्त्वयि न्यस्तमहीभरः ॥
प्रव्रज्यामाश्रितः श्रीमान्प्राप्तवैराग्यवैभवः ॥ ४३ ॥

---

१ देवभूयम् । २ हिमगिरेः । ३ पृथ्वीपतिः । ४ मेरुगिरिशिखरे ५ मोक्षस्थान ।

भवानापि महाधीरो भवदूंशनराधिपः ॥
साकं तपश्चरन्नेष मोक्षलक्ष्मीं जिघृक्षति ॥ ४४ ॥
धरापते ! ध्यानचतुष्टयस्य फलं विनिर्दिष्टमवेहि तत्र ॥
पूर्वद्वयं पापफलं प्रतीतं परद्वयं प्राप्तशुभप्रवाहम् ॥ ४५ ॥

इति जिनाधीशदर्शितधर्मदेशनाप्रकाशवद्धादर प्रवादिमदकंडूलवनशुंडालपचानन स्वयंबुद्धं तद्वचनमधुधारामधुकरायमाणसप्रीतांतःकरणेन धरारमणेन परिष्कृता परमास्तिक्यमान्विता सभा सभा सभाजयामास॥

वाणीं श्रुत्वा खगाधीशो द्रोणीं संसारवारिधेः ॥
स्वयं संपूजयामास स्वयंबुद्धं महाधियम् ॥ ४६ ॥
स्वयंबुद्धः सोऽयं सकलगुणमालाविलसितः ॥
कदाचित्सद्भक्त्या जिनपतिगृहान्वंदितुमनाः ॥
ययौ कल्याणाद्रिं कनकरुचिलीलाकपिशितां—
वराभोगं शृंगोल्लिखितसुरलोकं सुरुचिरम्॥ ४७ ॥

यः किल पिहिताम्बरोऽपि विक्रमदंशुकः, मेरुरपि समाश्रितन-

१ पूज्योऽयमतिबलोऽपि । २ ग्रहीतुमिच्छति ३ वनकरी । ४ सिंहः । ५ भया कांत्या सहिता इति सभा कांतिसहितेत्यर्थः । ६ आदरं चकारेत्यर्थः । ७ द्रोणी काष्टांबुवाहिनी । ८ गृहाः पुंसि च भूम्न्येव । ९ आच्छादितवस्त्रोऽपि शोभामानवस्त्रः इत्यत्र किमाश्चर्यं । पक्षे व्याप्ताकाशोऽपि शोभमानकिरणः। 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' 'चेल वसनमंशुक'इत्युभयत्राप्यमरः । १० मरुरपि समाश्रितनमेरुरिति विरोधस्तत्परिहार एव।सम्यगाश्रिता नमेरवो छायावृक्षा येन ।

मेरु., स तामरस[१]पदं दधानोऽपि नतामरसपदं दधान, बहुलताग[२]हनो ऽपि निरस्ततमोभर., मराऌिमहित[३]नंदनवनोऽपि अमराऌिमहितनंदनवन, रजस्फुरण[४]परिशोभितोऽपि नीरजस्फुरणपरिशोभित., सततमगम[५]हितोऽपि नागमहितो विराजते ॥

त्रि[६]दशोपसेवितो यः प्राज्य[७]विराजितरुचिर्महामेरुः
लक्ष्मीविलासगेहे जंबूद्वीपे विभाति दीप इव ॥ ४८ ॥

तत्र किल विनिश्चचिरंतनरत्नखचितानेकररभागिसगतसुरांगनासंचरणसचलत्कनककिंकिणीमृदुनिनादमनोहरान्नित्यान्लोकानकृत्रिमचैत्यालयान्यथाक्रममासाद्यानम्य च प्रमोदलहरीपरीवाहप्लावितान्तःकरणः सौमनसवनपौरस्त्यदिग्भागभासमाने जिनभवने कृतभगवत्सपर्याचर्य. पर्याप्तभाग्य क्षणं निषसाद ॥

---

१ तामरसपदं दधानोऽपि नतामरसपदं दधान इति विरोध. । तत्परिहारश्चाय—तामरसानां—कमलानां पदं स्थानं सरांसि दधानो धारयस्तथा नतानां नम्राणां अमराणां देवानां संपदं दधानः । नित्यं देवास्तत्र गत्वा क्रीडंत इति भाव. । २ बहुलतागहनोऽपि निरस्ततमोभरः बहुलतया कृष्णपक्षतया गहनोपि व्याप्तोऽपि निरस्ततमोभरः दूरीकृततिमिरप्रसर. इति विरोधस्य परिहार'—बहुलतानां वल्हीनां लतानां गहनानि अरण्यानि यत्र एतादृशः। ३ मराऌिभिः हंसीभिः । अमराऌिभिः देवश्रेणीभिरिति विरोधपरिहारः । ४ रजः परागस्तस्य स्फुरणेन शोभितोऽपि नीरजस्फुरणपरिशोभितः नीरजानि कमलानि तेषां स्फुरणं विकसनं तेन परिशोभितः इति अविरुद्धं । ५ सततं अगमहितोऽपि पर्वतेषु मान्योऽपि नागमहितः न पर्वतमान्यः इति विरोधस्य परिहारः—पर्वतेषु मान्यस्तथा नागाः नागकुमार इति देवविशेषः तेन महितः मान्य. नागशब्दोऽत्रोपलक्षणं तेन सर्वे देवा गृह्यन्ते । ६ त्रिदशा देवाः पक्षे वर्तिनव ७ प्राज्यं उत्कृष्टं पक्षे प्रकृष्टं आज्यं घृतं ।

अथागतौ पूर्वविदेहरम्यकच्छाख्यदेशान्नगरादरिष्टात् ॥
ऐक्षिष्ट सोऽयं धुरि चारणौ द्वौ मुनीश्वरौ मान्यगुणाभिरामौ ।

तौ किल प्रवाहौ करुणारसस्य, सेतू संसारांबुधेः, महामन्त्रौ क्रोधभुजगस्य, दिवसकरौ मोहांधकारस्य, आलवालदेशौ जिनभक्तिवल्ल्याः, राजहंसौ युगधरमहातीर्थसरस्याः, पूर्वाचलाववधिज्ञानदिनकरोदयस्य, मुनिपुंगवावादित्यगत्यरिंजयनाभधेयावभ्येत्याभ्यर्च्य च मुहुर्मुहुः प्रणम्य सुखासीनः स्वयंबुद्ध एव पृच्छाचक्रे ॥

महाबल इतीरितः सकलखेचराधीश्वरः
पुरे वसति नः प्रभुः स किल भव्य एवाथवा ॥
अभव्य इति संशयो मम हृदालये खेलति
क्षमागुणमणेः खनी ! सह तदीयजिज्ञासया ॥ ५० ॥
प्रश्नाभिधं मधु निगीर्य निरुक्तरीत्या
तस्याथ मीलदधरोष्ठदले मुखाब्जे ॥
आदित्यगत्यभिध एष मुनिर्मुखाब्ज-
हर्षाय सूक्तिकिरणान्प्रकटीचकार ॥ ५१ ॥

" भो सचिवोत्तंस[1] ! असौ भवत्स्वामी भव्यो भव्य एव भवदीय वचनशैलीं प्रत्येष्यति[2], प्राप्स्यति च दशमजन्मन्यस्मिञ्जम्बूद्वीपस्यालंकारभूते भारतखंडे युगारंभे प्रचुरागण्यपुण्यवशेन तीर्थकराग्रगण्यतां, सकलसंक्रंदन[3]प्रमुखवृंदारक[4]संदोहवंदनीयतां च ॥

*अतीतभवमेतस्य प्रतीतयशसः[5] शृणु ॥

---

१ भो सचिवभूषण । २ विश्वसिष्यति । ३ इन्द्रः। ४ देवसमूहः। ५ प्रख्यातकीर्तेः ।

* इतोऽतीतभवं चास्य वक्ष्ये शृणु समासतः । धर्मबीजमनेनोप्तं यत्र भोगेच्छयान्वितम् ॥ महापुराणे जिनसेनाचार्यविरचिते पंचमपर्वाणि

धर्मबीजं हि यत्रोप्तं शर्मभोगेच्छयाऽमुना ॥५२॥

विख्यातपश्चिमविदेहविराजमान-
श्रीगंधिलोल्लसितसिंहपुरे व्यराजत् ॥
श्रीषेणनामधरणीरमणः प्रियास्य ॥
श्रीसुंदरीति विदिता भुवनैकरम्या ॥५३॥
जयवर्मेति विख्यातो ज्यायान्पुत्रस्तयोरभूत् ॥
श्रीवर्मेति कनीयांश्च समस्तजनताप्रियः ॥५४॥

तदनु श्रीषेणभूपाले जनानुरागमुत्साहं च समीक्ष्य कनीयसि राज्यपट्टमातन्वाने, खर्वेतरनिर्वेदो जयवर्मा स्वयंप्रभगुरोः पार्श्वे गृहीतदीक्षो नवसयत एव अपरमिव सूर्यमधिनभस्थलमायांतं महर्द्धिसमेतं व्योमचराधिपतिमुच्चक्षुर्वीक्षमाणस्तद्भोगप्राप्तिचितादंतुरितस्वान्तः, वल्मीकबिलनिर्गतदंदशूकनिर्दष्टतनुर्भोगचिंतयैव सत्यक्तासु, सप्राप्तमहाबलभवः सततं भोगेष्वेव चिरतरमरज्यत ॥

इदानीं खलु निशान्ते विशांपतिं स्वप्ने त्रिभिर्मंत्रिभिर्दुष्पंके बलान्निमज्यमानमात्मानं ततस्त्वया दुष्टांस्तान्निर्भर्त्स्य पंकादुद्धृत्य, हरिविष्टरे विमलतरसलिलैरभिषिक्तं काचनं काचनसूत्रपिहसच्छविं सौदामिनीलतामिवातिलोलामनुक्षणं क्षीयमाणां दीपज्वालां च क्षणदाक्षये-विलोकयामास ॥

स्वप्नाविमौ खेचरभूमिपालो दृष्ट्वा भवन्तं प्रतिपादयन् सः ।
आस्ते त्वमेवाशु समेत्य पूर्वं स्वप्नद्वयं बोधय साधुबुद्धे! ॥५५॥
आद्यस्वप्नमवेहि त्वं साध्यपुण्यार्द्धिसूचकं ॥

---

१ चिंताव्याप्तमानसः । २ अहिः । ३ प्रभातसमये ।

आह द्वितीयरत्नमरतदायुर्मासावशिष्टतां ॥ ५६ ॥

— एष किल मुक्तिमानिनींदूत्येव काललब्ध्या प्रबोधितः पृथ्वीपतिस्तृषितचातकपोत इव बलाहककुलविगलितजलबिंदुसंदोहे, जात्यंध इव अनघकरणचणपरमौषधे दुर्गत इव निरवधिकनिधिनिधाने भवतोपदिष्टे सद्धर्मे परमां श्रद्धां विधास्यति ॥"

इति निगद्य सुधामधुरां गिरं द्युनियुगे गगनस्थलमुद्गते ॥
सचिव एष जवेन सहास्थलं प्रतिजगाम युगायतसद्भुजम् ॥५७॥
समासाद्य भूपं समाचष्ट सर्वं स्वयंबुद्ध एष स्वयं योगिवाक्यं॥
जिनेंद्रोक्तधर्मं मुनीन्द्रोपलाल्यं कुरु क्षेमवृद्ध्यै क्षितीशेति चाह।

तदनु स्वयंबुद्धवचनगुंफविस्रंभविजृंभितस्वायुःक्षयनिश्चयो विपश्चिदग्रगण्यः खचरपतिर्यथाविधितनुत्यागं विधातुमना, मनागितरमनोहरनिजमंदिरारामसुंदरजिनचंदिरशुभमंदिरकदालिताष्टाह्निकमहोत्सवं, सकलनयनसंतोषकल्पभूजाय निजतनूजाय प्रजाभागधेयाय अतिबलनामधेयाय प्रतिपादितराज्यभारं, सिद्धकूटमुपेत्य सिद्धार्चनपुरःसरं द्वाविंशतिदिनानि सल्लेखनाविधिमुल्लासयामास ॥
आराधनानावमुपेत्य भूपो भवांबुराशिं सहसा तितीर्षुः ॥
संत्यक्तबाह्यान्तरसंग्रहस्तन्निर्यापकं मंत्रिवरं न्ययंस्त ॥५९॥
तपस्यतस्तस्य शरीरवल्ली यथायथेयं तनिमानमागात ॥
तथा तथाऽवर्धत कांतिर्भूमा प्रकाशिताशेषदिगंतसीमा ॥६०॥

---

* तृषित पयसीवाद्धात्पतिते चातकोऽधिक । जनुरांध इवानघकरणे परमौषध ॥ रुचिमेष्यति सद्धर्मे त्वत्तः सोऽद्य प्रबुद्धधी । इत्येव मुक्तिकामिन्याः काललब्ध्या प्रचोदित ॥ एतच्छ्लोकद्वय उपर्युक्त गद्यमनुसरति ॥

१ मुक्तिस्त्री । २ बलाहको मेघः । ३ दरिद्र । ४ रथयुगवद्दीर्घप्रशस्तबाहुः । ५ कल्पवृक्षाय । ६ निर्यापक कर्णधार पक्षे आराधनाराधकधर्मोपदेश विदधान आचार्यप्रवर । ७ नियमितवान् । ८ प्रभाबाहुल्य ॥

तदानीमुदारतपा महाबलः शारदनीरद इवारूढकार्श्यस्तादात्विकमरणारंभव्रतमालोक्य क्वापि लीनाभ्यां लोचनाभ्यां विराजमानः, क्षीणशोणितमांसचर्मभ्यामप्यपरित्यक्तकांतिकदलाभ्यां कपोलाभ्यां विलसितः, पूर्वं नितांतपीवराभ्यां मणिकेयूरकिणकर्कशाभ्यामधुना तदीयमानसमार्दवमालोक्येव समाश्रितमार्दवाभ्यामंसाभ्यां संभावितः, त्रिवलीभंगसंगविरहितमाभुग्नं निर्वातनिस्तरंगसरोवरसंकाशमुदरप्रदेशमाबिभ्राणः, क्रमेण ललाटतटविन्यस्तकराम्बुजकुड्मलः मंगलानि नमस्कारपदान्यन्तर्जल्पेन जपन्नेव स्वयंबुद्धसमक्षं प्राणांस्तत्याज ॥

आसाद्यैशानकल्पं तदनु स हि शुभे श्रीप्रभे व्योमयाने ॥
राजद्रत्नोपपादामलशयनतलेऽजायताऽसौ सुराढ्यः ॥
तत्र प्रत्यग्रशोभा सपदि तनुलता वैक्रियिक्याविरासीत् ॥
व्योमाभागे निरभ्रे तडिदिव सुचिरादेकशुभ्राभ्रलग्ना ॥६१॥
तारुण्यलक्ष्मीकमनीयरूपस्तदा व्यलासील्ललितांगदेवः ॥
सुखोत्थवद्दिव्यदुकूलचेलस्रग्वी लसद्भूषणभूषितांगः ॥६२॥
ललितांग एष ललितांगसंपदा—
तुलितांगजोऽथ कलितांगदोज्ज्वलः ॥
अरुणाब्जशोभिचरणांचितो बभौ—
तरुणेंदुकांतिहरणोल्लसन्मुखः ॥६३॥
तद्वक्त्राब्जरुचिप्रवाहजलधौ श्रीकुंतलालीमिल—
च्छैवाले भ्रुकुटीतरंगतरले बिंबोष्ठसद्विद्रुमे ॥
दंतोदंचितमौक्तिके समतनोन्निष्कंपमीनश्रियं ॥

---

१ 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः' इत्यमरः । २ तुलितमदन । ३ धृतकेयूरशोभितः । ४ युक्तः ।

नेत्रद्वंद्वमिदं निमेषरहितं निःसीमकान्त्युज्ज्वलम् ॥६४॥
मंदास्मितप्रसरकुंदसुमाभिलाषात्
कर्णावतंसगलितं किल भृंगयुग्मम् ॥
नासाख्यचंपकनिरीक्षणनष्टचेष्टं
नेत्रद्वयं सुरवरस्य तदा विरेजे ॥६५॥

तदनु, कल्पद्रुमवृष्टकुसुमकुलगलितमाध्वीकधारालोलह्लोलंबनिकुरुंबझंकारनिर्भरेण मंदारवनमदमंदस्पदमानसमीरकिशोरचालितस्तनशाटीविलसदमरवधूटीनर्तनचलत्तुलाकोटीमधुररवपरिपाटीप्रचुरेण, सकलजनचित्तचलनावहमुरललनाजनकलनादगीतमनोहरेण, स्वयमेव विजृंभितमंदेतरसुरदुंदुभिस्तनितेन मुखरितादिगंतरे विमानांतरे. ललितांगदेवः किंचिद्वलिता दृशं समताधानमदमरमुकुटतटघटितमणिघृणिकलितप्रकाशासु निखिलाशासु व्यापारयन्नहो किमिदं, कायात., कोऽहमित्यादिविस्मयाविस्तारितचित्तस्तत्क्षणविलसितावधिविलोचनविलोकितपूर्वभवपरिचितस्वयबुद्धादिवृत्तात., कल्पतरुपरिशोभमानं विमानमिदं, इमे प्रणामतत्पराः सुरा., लास्यलीलाकरोऽयमप्सर परिवार इत्यादिक्रमेण सर्वमबुध्यत ॥

जयेश नंदेति गंभीरवाच सुरास्तदानीं नतमौलिमालाः ॥
विज्ञापयामासुरिदं समेत्य प्रजापयोधिं ललितांगदेवम्॥६६॥
आदौ मंगलमज्जनं विरचयन्पश्चाज्जिनेन्द्रार्चनां
भक्त्या कल्पय देव मोक्षपदवीप्रासादनिःश्रेणिकां ॥
श्रीमत्पुण्यबलार्जितं बलमिदं दृष्ट्वा समालोकय ।
प्रेक्षस्वाथ मनोज्ञनर्तनकलां स्वर्लासिकोल्लासितां ॥६७॥

---

१ नूपुर । २ घृणिः किरणः । ३ स्वर्गनर्तकीप्रकटिता ।

सौदामिनीसमानाङ्गीर्देवीस्तदनु लालय ॥
पञ्चेषुपट्टकरणीः शृंगाररसधोरणीः ॥ ६८ ॥
इति तद्वचनात्सर्वं चकारामरवल्लभः ॥
निसर्गवस्त्राभरणो निष्टप्तकनकच्छवि ॥ ६९ ॥

ततश्चाणिमादिगुणमणिगणरोहणायमानः समानः समासहस्रेण समासादितमानसाहारः, पक्षेणैकेन श्वसितसुगंधवंधुरनिश्वाससुरभित-सविधप्रदेशः, शरत्काल इव विधृतविमलाम्बरः, महाकविवचनोल्लास इव सरसशोभाविभासित, अंगदमनोजविलासोऽपि अनंगमनोज्ञविलासः, अथ ललिताङ्गदेवो देवीचतुःसहस्रपरिग्रहोऽनवरतोल्लासिताभिरपि नवर-तोल्लासिताभिः स्वयंप्रभा, कनकप्रभा, कनकलता, विद्युल्लता नामधे-याभिः रतिरूपसुभगधेयाभिर्विलासविजितगतिदेवीभिश्चतसृभिर्महादेवी-भिर्विविधान्भोगाननुभुञ्जान कालमनल्पमतिवाहयाचक्रे ॥

तदायुर्जलधेर्मध्ये तरला इव वीचयः ॥
भूयो देव्यो व्यलीयंत हतायुष्यतया तदा ॥

एवं पल्योपमपृथक्त्वावशिष्टे तस्यायुषि मूर्तिमतीव अमरसा-म्राज्यलक्ष्मी, संचरतीव कल्पलता, साकारेव शशिलेखा, स्थिरतामु-

---

१ मदनोत्तेजनकारिणीः। २ शृंगाररसकुल्याः। ३ अंबरं वस्त्रं आकाशं च। ४ महाकविवचनप्रबंधः शृंगारादिनवरसकातियुक्तो भवति। ललि-ताङ्गदेवोऽपि अनुरागआभासपन्नो भवति। ५ प्रथमतो विरोधाभासः तत्परिहारस्त्वेवं अंगदं बाहुभूषणं तेन मनोहरो विलासो लीला यस्य—तथा मदनमनोहरहावो यस्य सः। विलासो 'हावलीलयो' इति विश्वलोचनः। ६ प्रथमं विरोधस्तत्परिहारश्चैवं—अनवरतं अनिशं उल्लासिताभिः आनंदं प्रापिताभिः तथा नवरतं नवीनः संभोगः तेन उल्लासिताभिः हर्षं प्रापिताभिः।

पगतेव सौदामिनी लता, पुञ्जीभूतेव सकलसौन्दर्यलहरी, चित्रलेखेव संसारमहाभित्ते, ललामवल्लीव त्रैलोक्यस्य, संकेतभूमिरिव लावण्यस्य, लास्यसदनमिव तारुण्यलक्ष्म्या, उत्पत्तिस्थानमिव कान्ते, आकर्षणमंत्रसिद्धिरिव सकलनयनाना, महौषधसिद्धिरिव मदनमहेन्द्रजालिकस्य, निवासशालेव शृंगारस्य, नाट्यशालेव संगीतविद्याना स्वयंप्रभानाम देवी समजायत ॥

तस्याः किमिति वर्ण्यते सौन्दर्यगरिमा तथाहि

तस्या नेत्रं स्मितं चासीदुच्चैःकोरकसन्निभ॥[1]
अधरश्चरणश्चापि प्रवालश्रीविशोभित. ॥[2]
अस्या ओष्ठतलं पयोधरयुगं चित्तं च नाकाधिप—
क्रीडोद्यानमिवाबभौ मृगदृशश्चंचत्सुरागोज्ज्वल ॥[3]

---

१ उच्चकोरकसन्निभ दीर्घकमलकुड्मलसम नेत्रं । स्मित च श्वेतकमलकलिकातुल्य । २ अधरचरणौ कोमलकिसयलशोभौ विद्रुमकान्तिशोभौ वा । ३ यथा इंद्रनंदनोद्यान सुरागोज्वल सुराणा देवानां अगै. वृक्षै' कल्पवृक्षै' उज्ज्वलं भवति तथा अस्या ओष्ठतल, पयोधरयुग, चित्त च सुरागोज्ज्वल वर्तते । तदेवं:—सुष्ठु रागः सुरागः लौहित्य तेन उज्ज्वलं, ओष्ठतल लोहितत्वादुज्ज्वल शोभते। पयोधरयुग च सुराणा अगः पर्वत' मेरुरित्यर्थः तद्वत्प्रतिभाति सुवर्णसवर्ण उच्चैश्च शोभते। चित्त च सुरागोज्ज्वल सुष्ठुप्रीत्या उज्ज्वल वर्तते। यथा इंद्रोद्यानं सुमनोजातेन लालनीय तथा अस्या' स्वयंप्रभायाः केशाना वलय ' सुमनोजातेन पुष्पसमूहेन लालनीय अभवत् । अस्या वचश्च ' सुमनोजातेन देवसमूहेन लाल्य मान्य अभूत् । अस्या वयस्तारुण्य रूप च सुमनोजातेन–मदनेन लाल्य समभवत् ।

केशानां वलय वचश्च सुमनोजातेन लाल्य वयो
रूप चेति तदंगवर्णनकला पार गिरां गाहते ॥

ततश्च निजमनोभृंगसंचरणोद्यानवाटिकया तया वधूटिकया सह-ललितांगदेवो वशयेव वशावल्लभः, शचीदेव्येव पुरंदर, सुंदरमदरोद्यानवीथिकासु कोकिलकुलकलरववाचालासु, युवतिष्विव सद्रूपशोभितासु, गणिकास्विव विटपालंबितांबरासु, सुंदरीजनवदनतटीष्विव सुपर्वराजमनोहरासु, अन्येषु च नीलाचलखचराचलप्रभृतिवनोद्देशेषु चिरतरमरमत ॥

स्वयंप्रभासंगमलाभसौख्यपयोनिधौ मज्जनमाचरन्सः ॥
उदीतमात्मन्यनिमेषशब्दमन्वर्थतामेष निनाय देवः ॥७३॥

१ वशा हस्तिनी ' करिणी धेनुका वशा ' इत्यमरः । २ मदरोद्यानवीथिका, सन्तश्च ते द्रवश्च वृक्षाः तैः उपशोभिता प्रशस्तवृक्षोपेता, अर्थात् कल्पवृक्षोपेता युवतय इव । युवतय, सच्छोभन रूपं सौंदर्य तेन शोभिताः । ३ गणिका, विटपैः खिद्गै.—कामुकै आलंबितं वस्त्रं यासा ताः । मदरोद्यानवीथयश्च विटपै, पल्लवैरालंबित अंबर आकाश याभिस्ता'। विटपोऽस्त्री लतास्तत्रखिड्गविस्तारपल्लवे इति विश्वलोचन. । ४ सुदरीजनवदनतट्यः सुपर्वणः पौर्णमास्या, राजा चद्रस्तद्वन्मनोहरास्तथा मदरोद्यानवीथयश्च सुपर्वणा देवाना राजा इद्रस्तेन मनोहराः। सुपर्वाण'सुमनसस्त्रिदिवेशा दिवौकसः इत्यमर' । ५ अनिमेषो देवः मत्स्यश्च । यथा अनिमेषः मत्स्य' पयोनिधौ मज्जन करोति तथा अयमपि ललितागो देवः स्वयप्रभा' सगमजनितसुखसागरे मज्जन कुर्वन्ननिमेषशब्द सार्थकं व्यधात् ॥ ' सुरे मत्स्येऽप्यनिमिष सुरे मत्स्येऽनिमेषवत् ' इति विश्वलोचनः ॥

अर्हद्दासहृदालवालवलयाज्जातो बुधैः सन्नुतः।
मोन्मीलत्स्तवकोल्लसन्नवरसैरानंदमुद्वेलयन् ॥
मान्यश्रीपुरुदेवचंपुविदितः कल्पद्रुमोऽनल्पकं ॥
नृणामाश्रयिणां फलं वितनुतामाचंद्रतारावधि ॥ ७४ ॥

※ इति श्रीमदर्हद्दासकृतौ पुरुदेवचंपुप्रबंधे प्रथमस्तवकः ※

---

१ अयं पुरुदेवचम्प्वभिधः कल्पतरुः अर्हद्दासमहाकवेर्हृदयालवाले जातः, विबुधैर्देवैश्च स्तुतः, विकसत्स्तवकेषूल्लसच्छृंगारादिरसैर्विदुषामानंदमुद्वेलयति ॥ अयं कल्पवृक्षः आचंद्रतारावधि अस्यालंबनं कुर्वतां जनानां विपुलं फलं प्रयच्छत्विति शम ॥



## अथ द्वितीयः स्तबकः ।

अथ कदाचिदस्य देवस्य भूषणमहितमसृणमणिगणेषु पूर्ववन्निशांतदीपस्वरूपेषु, सहजविशालवक्षःस्थलसगतमालायां विद्युतीव पूर्ववृत्तांतायां, विशकटवदनतटे पूर्ववत्प्रभाताऽजसकाशे, तत्कल्पवास्तव्यतत्परिचारकत्रिदशेषु पूर्ववद्दिनविजृंभितखद्योतसदृशेषु, तद्वियोगवातधूत इव कंपमाने तदावाससंबंधिकल्पपादपे, जन्मप्रभृत्यनुभूतसमस्तसुखेष्वपि पिंडीभूय दुःखात्मतामुपगतेष्विव दुःसहेषु, समागततत्सामानिकदेवसांत्ववचनसमासादितधैर्यप्रकाशनसूर्यः सोऽय ललितांगसुरवर्यः, सकलभुवनविलसिताजिनभवनानि मासार्धेन संपूज्य, अच्युतकल्पावलंबितराविबिंबानिकाशजिनबिंबानि पूजयन्सन्निहितायुरंत समाहितस्वांतः, किरीटतटविन्यस्तकरकुड्मलः, नमस्कारपदानि उच्चैरनुध्यायन्, शारदसमयसमुदितनीरद इव अदृश्यतामाससाद ॥

जंबूद्वीपे सुरशिखरिणः पूर्वदिक्स्थे विदेहे
रम्या भूमिर्विलसति तरां पुष्कलावत्यभिख्या ॥
चित्रा तत्र त्रिदिवसदृशी सौधराजत्पताका—
वातानीतामरतरुसुमामोदिनी राजधानी ॥ १ ॥
एतामुत्पलखेटनामनगरीं तामावसद्भूपतिः
प्रख्यातो भुवि वज्रबाहुरिति यो वज्रीव सद्वैभवः ॥
कांता तस्य वसुंधरा शशिमुखी देवः स नाकाच्च्युतः
पुत्रस्तत्र तयोरभूत्प्रकटयन्स्वां वज्रजंघाभिधां ॥ २ ॥
स्वजनकुमुदानंदी संशीलयन्विविधाः कला. ।
सकलविमतान्पद्मान्संकोचयंश्च समंततः ॥

स किल चतुर्थे श्रीमान्बालेंदुरुज्ज्वलमंडलः।
कुसुमसुकुमारांगः कुंदोज्ज्वलस्मितचंद्रिकः ॥ ३ ॥

तदनु, राकाशशीव शरच्चंद्रिकया तारुण्यलक्ष्म्या भासुरशरीरो वज्रजंघकुमारः सुधावदाताभिरपि निजगुणश्लाघासि, समस्तजनानां रक्तानातन्वन्, पूर्वभवपरिशीलितस्वयंप्रभानुरागेण लोलाक्षीषु निःस्पृहतामुपगतोऽपि सरस्वतीकीर्तिलक्ष्मीभिः सततं चिक्रीड ।

तत स्वयंप्रभादेवी च ललितांगदेववियोगेन प्रियविप्रयुक्ता चक्राह्वीव बहुदीनदशामापन्ना, जलदकालसमुज्झितकलालापा कोकिलेव विविधसंतापसंततस्वांता, तत्कालोचितमात्त्ववचनोद्यतेन अंतःपरिषद्गतेन दृढवर्मदेवेन प्रचोदितसन्मार्गेण षण्मासाज्जिनपूजां विधाय सौमनसोद्यानसौमितचैत्यतरुमूले गुरुपंचकं मनसा ध्यायती सहसा निशापगमे तारकेवादृश्यतामाटिटीके।

पूर्वोक्ते प्राग्विदेहेऽस्ति पुरी सा पुंडरीकिणी ।
यत्र सौधास्तरुण्यश्च वियन्मध्याविराजिताः[१] ॥ ४ ॥
वज्रदंत इति विश्रुतो नृपस्तां शशास तुलितामराधिपः ।
यो जिगाय परलोकमद्भुतं मार्गणाननविजहद्गुणैः परं[२] ॥५॥
लक्ष्मीरिवापरा तस्य लक्ष्मीमतिरभूत्प्रिया ।
कचस्फूर्तिश्च मूर्तिश्च यस्याः सज्जघनोज्ज्वला[४] ॥ ६ ॥

---

१ सौधाः आकाशमध्यशोभिताः। तरुण्यश्च वियदिव आकाशमिव सूक्ष्मं यन्मध्यं अवलग्नं तेन विराजिताः । २—३ मार्गणान् बाणानमुंचता ऽनेन नृपेण केवलं गुणैर्ज्याभिरेव शत्रवः पराजिताः पक्षे इमं नृपतिं याचकाः परित्यज्य अन्यत्र न गच्छन्ति । पराक्रमादिगुणैरेवानेन नृपा जिताः। ४ कचस्फूर्तिः सजलजलदवत्स्निग्धकान्तिधारिणी, यस्या मूर्तिः शरीरं च सता प्रशस्तेन जघनेन कट्यग्रभागेन उज्ज्वला ।

एषा किल सुरुयोपा श्रीमति नाम्ना तयोः पुत्री सजाता, क्रमेण मंजुलतारुण्यमजरीसुराभितनुलता सचारिणीव मदनराज्यस्य लक्ष्मीः, प्रत्यादेश इव रतिदेव्या, प्रतिकृतिरिव लक्ष्म्याः, प्रतिबिंबमिव सरस्वत्याः, कलशप्रतिष्ठेव विधातृसृष्टेः, तरगपरपरेव श्रृंगारसागरस्य, पुनरुक्तिरिव सौभाग्यस्य, अधिदेवतेव कांतिकल्लोलस्य, मीनकेतनमहीक्रमनभद्रपीठेनेव, मणिभूषणकांतिनिम्नगारुचिसैकतमडलेनेष, यौवनमदहस्तिमस्तकेनव, पृथुलजघनवलयेन विलसिता, नाभितलालवालसमुद्गतरोमराजिलताफलाभ्यामिव, हृदयतटतटाककमलमुकुलाभ्यामिव, चूचुकमुद्रासुद्रिताभ्यामिव, श्रृंगाररसपूर्णशातकुंभकुंभाभ्या वक्षोरुहाभ्या विराजमाना, शुभतरलक्षिण अब्जमदनिर्मूलननिदानेन पदेन वदनेन च विराजमाना, भ्रमराजितेन कचनिचयेन नाभिपुटेन च लसमाना, जलदकाललक्ष्मीरिवोल्लसद्धारपयोधरा सर्जघनाभिरामा च निद्रेव सकललोचनग्राहिणी चकासामास ।

**कदाचित्सौधाग्रे मृदुलतमहंसांसमृदुले**

---

१ ब्रह्मा। २ भूपतिः। ३ शातकुंभ सुवर्णं। ४ शुभतर—लाक्षेण शुभतरजतुरसेन पदेन. तथा शुभतरल-आक्षेण शोभनचचलकटाक्षेण अक्ष्णः इदं आक्षमिति व्युत्पत्तेः। ५ अब्ज कमल अब्जश्चंद्रश्च। ६ भ्रमर—अजितेन भृंगाजितेन भृंगादपि अधिककृष्णवर्णेन केशसमूहेन। भ्रम-राजितेन भ्रमो जलावर्तः तेन अजितेन नभिपुटेन। 'स्यादावर्तोऽभसा भ्रमः' इत्यमरः। ७ उलसद्धारपयोधरा यथा जलदकालः उल्लसत्—धारायुक्तपयोधरान्मेघान्दधाति तथा इय श्रीमती उल्लसत्—हारसहितस्तना वर्तते। वर्षाकालः संभृतजलजलदैर्युतो भवति। इय च सजघना प्रशस्तकटिपुरोभागा। ८ निद्रया लोचने निमीलते इय च सकललोचनानि स्वसौंदर्येण आकर्षति।

विराजत्पर्यंके विविधमणिकान्त्या कबचिते ।
मरालीवोन्मीलत्सितजलजषंडे सुदृगियं
ययौ निद्रामुद्रां त्रिभुवनवशी हेमलतिका ॥ ७ ॥

तदानीं तत्पुरमनोहरोद्यानमध्यासीनमतिमानमहिमानमुत्पन्नकेवलज्ञान विशालतपस यशोधरगुरुमार्चितुमाविनभःस्थलमुच्चलितानाममराणाममंद-सम्मर्दसंवर्धितकलकलेन निशाकरदृढालिंगितव्योमलक्ष्मीवक्षः स्थलत्रुटितविगलितमुक्तादाममणिपंक्त्येव, जिनराजदर्शनकुतूहलिन्या स्वर्गलक्ष्म्या प्रहितकटाक्षपरंपरयेव, सौरभ्यसरुद्धदिशावकाशया पतंत्या पुष्पवृष्ट्या समाकृष्टमदतुगभृगसंघझंकारेण, सुरदुंदुभिनि.सरदमंदनिध्वा-नेन च प्रबुद्धा सा तन्वगी, चक्रांगीव पर्जन्यनिस्वनेन संत्रस्ता, देवागमनिरीक्षणक्षणजनितपूर्वभवस्मृति., स्मृतिजातसुंदरांगं ललितांगं स्मृत्वा, हा रूपविचित्रांग ! सुरागनावदनांबुजभृंगकरणापाग ! देव ललितांग ! कासि कासि,मनसि मे कीलित इव ने विलासो विलसतीति प्रलपती श्रीमती मूर्च्छामुपाजगाम ॥

मलयजघनसारासारसेकैर्मृणाली—
मृदुलकुलनिधानैः पुष्पशय्याधिरोहैः ॥
व्यजनपवनपोतैर्मंदमाश्वास्य नीता
सुदृगियमथ संज्ञां सादराभिः सखीभिः ॥८॥
चकोराक्षी सेयं मनसि खचितं तं सुरवरं
पुरः पश्चात्पार्श्वेऽप्युपरि किल पश्यंत्यनुकलं ॥
सखीभिः साशंकं सपदि परिपृष्टापि बहुधा।
पिकीव ग्रीष्मर्तौ समतनुत मौनव्रतकलाम् ॥९॥

तदनु पर्याकुलाभिरालीभिर्निवेदितोदन्तौ लक्ष्मीमतीवज्रदन्तौ मातापितरौ तूर्णमभ्यर्णमेत्य, बलवदस्वस्था तनया दृष्ट्वा, शोककीलित-स्वान्तौ तन्वंगि ! प्रतिक्षणमुत्संगमुवमावयोरेहि विधेहि परिष्वंगमिति व्याहरतौ पुरो निषीदतु ।

राजायमिंगितज्ञानामग्रगण्यो वरेण्यो वचनविदामुदारगभीरमति-र्मनसि तनुजाविकारबीजं प्राग्जन्मानुभव· कोऽपि इति निश्चित्य, यथा निश्चयमग्रमाहिषीं लक्ष्मीमतीं प्रतिपाद्य, नियोज्य च कन्यासमाश्वासन-सनिधानाय मधुरतमकौशलविधात्रीं पडितानामधात्रीं, कांतया सह निर्जगाम ।

करणीयं नरेन्द्रस्य कार्यद्वैतमभूत्तदा ।
कैवल्यं स्वगुरोश्चक्रसंभूतिश्चायुधालये ॥१०॥
उपस्थिते कार्ययुगे नृपस्य चित्तप्रवृत्तिर्द्विविधा बभूव ॥
महीधरे मार्गगते निरुद्धे स्रोतःप्रवृत्तिर्द्विविधेव लोके ॥११॥

तदनु किमत्र प्रथमं कर्तव्यमिति क्षणं चिंताकुलो वसुधापति-र्धर्मार्थकार्ययोर्मध्ये धर्मकार्यमेव मुख्यमिति निश्चित्य, भगवतो यशोधर गुरोः पूजां विधातु पृतनया सार्धमुपसृत्य जगद्गुरो. [1]सुराचितमपि असु-[2]राचित, वनीपकजनमनीषितपूरकमपि [3]अवनिपकजनमनीषितपूरकं,

प्रथम विरोधाभासः तत्परिहारस्त्वेव, सुराः कल्पवासिनो देवाः।२ असुराः भुवनत्रिकदेवाः । ३ वनीपका याचकाः ' वनीपको याचनको मार्गणो याचकार्थिनौ ' इत्यमरः ॥ याचकजनमनीषितपूरकोऽपि तथा नेति वि-रोधस्तत्परिहृतिरियं—अवनिं पृथ्वीं पालयन्ति इति अवनिपाः राजानः स्वार्थे कप्रत्ययविधानादवनिपक इति भवति नृपजनमनोरथपूरक इत्यर्थः ॥

खरांशुकांतमपि नखरांशुकान्त पदयुगल पूजयामास ॥

तत्पादौ प्रणमन्नसौ नरपतिर्लब्धावधिः शुद्धधीः
स्वस्यैवाच्युतकल्पवासवपदं पुण्यार्जितं प्राग्भवे ॥
श्रीमत्या ललितांगदेवविलसत्कांतार्थमन्यच्च तद्
वृत्तं सर्वमतिस्फुटं विदितवानुद्वेलपुण्योदयः ॥१२॥

तदनु वादितभगवच्चरणे धरणीरमणे तदारामान्निर्गत्य स्वपुरमागत्य च, निर्वर्त्य चक्रपूजां तनूजां पडितावशे विधाय, षडंगबलेन बलेन दिग्जयाय प्रास्थितवति, पडितापि तमालमंजुला कृतमालमंजुलां, सालशोभिता रसालशोभितां, नीपविराजिता वनीपविराजिता, शुकराजिरमणीया किंशुकराजिरमणीयां, नरवृंदानंदमदायिनी किंनरवृंदानंदसदायिनीं नीरजातविलसितां वानीरजातविलसिता, सरस्थितिमनोरमां केसरस्थितिमनोरमा, पेयतरुमंडिता चापेयतरुमंडलमंडिता, तालबंधुरां, हिंतालबंधुरां, रसोज्ज्वलेन सारसोज्ज्वलेन, सकलचित्तहारिणा हंसकलचित्तहारिणा, पद्माकरेण विराजितामशोकवनिकां शोकाक्रांतमत्या

---

१ खराः तीक्ष्णाः अंशवः किरणाः यस्य सः खरांशुकांत सूर्यः तद्वत्कांतमपि उज्ज्वलमपि न खरांशुकांतमिति विरोधे तत्परिहारितिरित्थ—नखराणां नखानां अंशवः किरणाः तैः कांत मनोहर। २ तापिच्छवृक्षमनोहरां। ३ शम्याकतरुसुदरां, कृतमालः (महाराष्ट्रभाषायां बाहवा इति) ४ सर्जवृक्षशोभिता। ५ आम्रवृक्षमनोहरां। ६ कदंबवृक्षसुंदरा। ७ पलाशकमनीयां। ८ किन्नरा देवविशेषाः। ९ नीरजात कमल। १० वेतसतरुसुंदरां। ११ पुन्नागतरुरमणीयां। १२ पेयतरु। (?) १३ तालवृक्षमनोहरां। १५ हिंतालस्तृणवृक्षः।

श्रीमत्या सम समासाद्य, तत्र किल विचित्रचद्रकांताशिलातले निषण्णा, पाणिपल्लवेन सस्नेहं तदंगानि संस्पृशंती, दशनरुचिविसरविमल, सलिलैस्तदगसंताप निर्वापयतीव मधुरतरमिम व्याहार विस्तारयामास।

अहं सुदाति! पंडिता निखिलकार्यलाभे ध्रुवं
नवोत्पलदलेक्षणे! ननु तवास्मि मात्रा समा ॥
ततो वद पतिंवरे सपदि मौनहेतुं स्फुटं
किमेष मदनोद्यमः किमथवाग्रहप्रक्रमः ॥ १३ ॥
इति पृष्टा विशालाक्षी निशायां नतपंकजा ॥
पद्मिनीवानतमुखी ह्रिया वचनमादधे ॥१४ ॥
कथा प्राग्जन्मकालिता स्मृता देवागमेक्षणात् ॥
लज्जायवनिकांतस्था पुरो नटाति ते सखि ॥ १५ ॥

पुरा खलु धातकीखंडमडनायमाननदनवनसुदरपूर्वमंदरापरविदेहाश्रितगंधिलविषयाभिरामं पाटलिग्राममधिवसतो नागदत्तवणिजः सुदतिविख्यातया कातया विराजमानस्य नद—नंदिमित्र—नंदिषेण—वरसेनजयसेननामान सकलगुणासीमानः पचपुत्रा., पुत्रिके च मदनकाता श्रीकांतेति, तयोरह कनीयसी संजाता निर्नामिका नाम ।

कदाचिच्चारणचरितविदितरम्यवनविलसदंबरतिलकधराधरे विराजमान पिहितास्रवमुनिमानम्य, केन कर्मणाऽस्मिन्दुर्गतिकुले जातेत्यप्राक्ष । इति मया पृष्टोऽसौ मुनिरिदमाचष्ट । अत्र किल विषये पलालपर्वतग्रामे पूर्वं देवलाख्याद्ग्रामकूटात्सुमतेरुदरे जाता धनश्रीरिति विश्रुता भवती कदाचित्परमागमपठनकर्मठस्य तावकविहारभूमिमाश्रितस्य समाधिगुप्तस्य मुनिवरस्य समीपे पूतिगंधबंधुरं कुक्कुरकलेवर निधाय, तत्कर्मणा

विभिनायमान प्रतिपादितकलुषवचनं तमेनं भयभरेण प्रणम्य क्षमां ग्राहयामास ।

तेनोपशमभावेन स्तोकपुण्यं समाश्रिता
जगत्यां दुर्गतेऽत्यंतं जाता मानुषजन्मनि ॥१६॥
ततः कल्याणि ! कल्याणं तपोऽनशनमाचर
जिनेंद्रगुणसंपत्तिं श्रुतज्ञानमपि क्रमात् ॥१७॥

षोडशतीर्थकरभावनाश्चतुस्त्रिंशदतिशयानष्टमहाप्रातिहार्याणि पंचकल्याणान्युद्दिश्य त्रिषष्टिदिवसैः क्रियमाणमुपोषितव्रतं जिनगुणसंपत्तिरिति जोच्यते। अष्टाविंशतिमतिज्ञानभेदानेकादशांगान्यष्टाशीतिसूत्राणि प्रथमानुयोगं परिकर्मद्वयं चतुर्दशपूर्वाणि पंचचूलिका षडवधिज्ञानमनःपर्ययज्ञानद्वय केवलज्ञानमेकमुद्दिश्याष्टपंचाशदधिकदिनशतेन क्रियमाणमनशनव्रतं श्रुतज्ञानमिति श्रूयते ॥

इति मुनिवरोद्दिष्टं धर्मं विधाय यथोचितं
सुदति ! ललितांगस्य ख्यातामरस्य सती प्रिया ॥
त्रिदशभुवने भूत्वा गत्वा मुनिं तमपूजयं
दिवि च सुभगान्भोगान्भुक्त्वेयमद्य बभूव च ॥ १८ ॥
पुरः पश्चादूर्ध्वं दिशि दिशि च दिव्यांबरधरं
स्फुरद्रत्नप्रोद्यन्मुकुटविलसन्मरतकतलं
तमेनं पश्यामि प्रकृतिकमनीयं सुरवरं
मनोगेहेऽप्येष स्फुरति सततं कीलित इव ॥ १९ ॥

तदलाभे पुनर्मम तनुलता तदीयमव्यसाम्य परिशीलयितुमिव

१ कोपयुक्त ।

क्षामता न जहाति, सततमश्रुबिंदवो मामकीनदुःख द्रष्टुमक्षमतया तमन्वेष्टुमुद्यता इव निर्यान्ति ॥

नभःस्थलगतो नवानुलेपनगतश्चंद्रो न शीतलः, कंठगता क्रीडोद्यानगता च मल्लिमाला मां नानंदयति। समीपसंजातः सरोरुहवनसंजातः प्रमदालिमधुरालाप पर दुःखयति । कविता विदग्धसखीजनक्लृप्ता दासीजनक्लृप्ता च कुसुममृदुलशय्या न हर्षमाददाति । हृद्गता करांगुलिगता च समेधमानरुगूर्मिका कंकणं विजृंभयितुमर्हति

स्मृतिपथगत. समीपदेशवलमानश्च दक्षिणमरुद्वरो ममांगानि शोषयति ॥

शरान्वर्षति मारोऽयं क्षणकालश्च वर्षति ।
श्यामाद्य तत्र रक्तापि धवला च भवाम्यहं ॥२०॥

---

१ चंद्रो निशाकरः घनसारश्च [ कापूर इति महाराष्ट्रभाषाया ] 'चंद्रः सुधांशुकर्पूरस्वर्णकंपिल्लवारिषु ' इति विश्वलोचनः । २ सानंदसखी मधुरभाषणं, सानंदभ्रमरमधुरगुंजारवश्च । 'अलिर्भृंगे सुराया स्त्री स्यादालिः पिंङ्क्ले स्त्रिया । सख्या पंक्तावपि ख्याता ' इति विश्वलो०.। ३ कुसुमवत्पुष्पवन्मृदुला शय्या रचना यस्याः एतादृशी कविता, कुसुमनिर्मितकोमलशय्यातल च । ४ हृद्गता रुगूर्मिका—मनःपीडापरंपरा तथा करांगुलिगता प्रवर्धमानकांतिसहिता ऊर्मिका अंगुलीयकं । कंकण करवलय करभूषण, जलकणं च । ५ दक्षिणदिग्वायुश्रेष्ठः पक्षे उदारामरवरः । ' दक्षिण सरलो वामपरच्छंदानुवर्तिषु त्रिषु स्याद्वाच्यलिंगोयमवाचीप्रभवे मतः ' ' मुरुत्पुंसि सुरे वाते ' इति विश्वलो० । दक्षिण. सरलोदारौ इत्यमर. । ६ वर्षमिवाचरति । ७ श्यामा यौवनमध्यस्था कृष्णा च । रक्ता अनुरक्ता लोहितवर्णा च । ८ तदीयाविरहात्पाण्डुरवर्णा ।

इत्युक्त्वा पुनरप्युवाच मधुरं सा श्रीमती तां सखीं ।
सत्यां त्वय्यरविन्दनेत्रि ! मम किं दुःखस्य लेशो भवेत् ॥
ज्योत्स्नायां कुमुदावलेरिव सखि ! त्वं पंडिता मामके ।
काले सत्यमरालकेशि!सुगुणे! मत्कार्यसिद्धिं कुरु॥२१॥

इदं च मया विलिखित पूर्वभवचरितपट्टक महाकविकाव्यसंगत-व्यगवैभवमिव गूढागूढं, गणिकाजनवचनमिव धूर्तजनमन समोह-कारणमादाय, अत्रत्यगूढार्थसंकटे पतिव्रवान्धूर्ततरान्पराकृत्य, कविम-तिरिव सुश्लिष्टार्थं, लक्ष्मीरिवोद्योगशालिन पुरुषं, तं सुरोत्तमं मार्ग-माणा प्रस्तुतकार्यं साधयेति ॥

पंडिताऽपि तरलाक्षि ! तवेष्टं क्षिप्रमेव कलये तनुगात्रि ! ।
इत्युदीर्य सहसा निरगच्छत्पट्टकांचितकरा दरकंठी ॥२२॥
गत्वा महापूतजिनालयं सा कृत्वा जिनेंद्रांघ्रियुगप्रणामं ।
तस्थौ ततः पट्टकशालिकायां परीक्षणार्थं लिखितं प्रसार्य ॥२३॥

यत्र च जिनभवने संध्यारागारुणा इव पद्मरागकुट्टिमेषु, तरं-गितमलिनसंगहारिता इव मरकतमयमणिभूमिषु, गगनतलप्रसृता इवे-न्द्रनीलभित्तिषु, तिमिरपटलविघटनोद्यता इव कृष्णागरुधूपधूमोद्गारि-वातायनेषु, प्रभातचन्द्रिकामध्यपातिता इव स्फटिकमणिभित्तिप्रभासु, गगनसिंधुतरंगिण इव सितपताकांशुकेषु, राहुमुखकुहरप्रविष्टा इव जंभारिमणिजृंभितगवाक्षेषु, पल्लविता इव सूर्यकांतोपलेषु, निर्गीर्णा इव वंदारुभव्यवृंदारकसंदोहमणिमुकुटमणिप्रभासु विराजते रविगभस्तयः ॥

६ कुटिलकेशि 'स्यादरालः पुमान्सर्जे मत्तेभे कुटिलेऽन्यवत् ॥ इति विश्वलोचनः । ७ इंद्रनीलमणिः ।

तत्रागतान्कुशलकोमलसूक्ष्मबुद्धीन् ॥
सर्वान्किमेतदिति चित्तमवेक्षमाणान् ॥
सा पंडिता समुचितैर्वचनप्रचारै—
र्गूढस्थलेषु कुशलान्कलयांबभूव ॥२४॥

तदनु कृतदिग्जयश्चक्रधरो नरविद्याधरसुराकिरीटमणिकोणशाणकषणनिर्मलीकृतचरणनखमणिः, कृतकृत्योऽपि निजनंदिनीविवाहसविधानचिंतादतुरितस्वात', केतुजालविमलपटाविगलितातपां निजराजधानीं प्रविवेश ॥

चक्री ततः समाहूय चिरमाधियुतां सुतां ।
स्मितांशुसलिलैः सिंचन्निव व्याहारमादधे ॥२५॥
शोकं जहीहि शतपत्रविशालनेत्रे! ।
स्नाहि प्रसाधनविधिं कुरु कोमलांगि ! ॥
मौनं च संत्यज तवेष्ट समागमोऽद्य ।
क्षिप्रं भविष्यति कुमारि! तमालकेशि ॥
यशोधरमहायोगिकैवल्यकलितावधि ॥२६॥
सर्वं जानाति तेऽस्माकं त्वत्कांस्याऽपि वृत्तकम् ॥२७॥
शृणु वक्ष्यामि लोलाक्षि ! त्रयाणां वृत्तमुत्तमं ।
पृथक्पयोजवदने ! भवांतरविभावितम् ॥२८॥

पुरा खल्वितः पंचमे भवे विभवजितसुरनगर्यां इहैव पुंडरीकिणी नगर्यां, अर्धचक्रिणस्तनूजश्चद्रकीर्तिनामधेयोऽहं क्रमागतां राज्यलक्ष्मीमासाद्य, जयकीर्तिनाम्ना वयस्येन चिरं रममाणो, गृहमेधिगृहीताणुव्रत कालान्ते चंद्रसेनाख्य गुरुमाश्रित्य त्यक्ताहारशरीरः सन्यास-

विधिमालम्ब्य, माहेंद्रकल्पे सप्तसागरायुःस्थितिः सामानिकः सुरोऽस्म-त्समानर्द्धिविभवेन जयकीर्तिना सह समभूवं ॥

ततः कालान्ते प्रच्युतौ पुष्करद्वीपदीपायमानपूर्वमदरपौरस्त्य-विदेहविशोभितमगलावतीविषयसंगतरत्नसंचयनगरमधिवसत श्रीधर-महीपालस्य मनोहरा मनोरमा इति विख्यातयोर्देव्योस्तनयौ नाम्ना श्रीवर्माविभीषणौ बलकेशवौ जातौ परिणताविव परस्परसौहार्दरसौ विलसमानौ, राज्यलक्ष्मीं मयि ज्येष्ठे निक्षिप्य, तपसे प्रयाते ताते सुधर्मगुरुप्रतिपादितदीक्षे निरतिशयतपोदक्षे सिद्धपदमधितिष्ठमाने, मय्यतिमात्रवात्सल्येन स्थितायां मनोहरायां च, चिराय सुधर्मगुरुनिर्दिष्ट तप. समारचय्य ललितांगपद प्राप्ताया, आवा चिरं भोगाननुभवावः स्म॥

तदनु, विभीषणवियोगेन खिद्यमानमानसोऽहं, पूर्ववात्सल्यप्र-त्यासन्नेन मातृचरललितागदेवेन बोधितस्त्यक्तशोकः प्रसन्नमतिर्युगंधर-महायोगिसमीपे जैनीं दीक्षामासाद्य, पंचसहस्रै. पृथ्वीपतिभि सम सिंहनिष्क्रीडित नाम दुश्चर तपस्तप्त्वा, महोदर्कं सर्वतोभद्र च-चारित्वा, समासादितविज्ञानत्रयविमलालोकः सुखैकताने अच्युतकल्पविमाने द्वाविंशतिसागरजीवित सुरेंद्रो भूत्वा, तत्र दिव्यान्भोगाननुभुजानो मातृवात्सल्येन ललितागदेवमागत्यारोप्य च मामकीन विमान आनीय-चास्मत्कल्पमसकृत्सत्क्रियां विस्तारयामि स्म ॥

अथ सोपि ललितागः सुचिर भोगाननुभुंजानो मुहुर्मुहुर्मया पूजितः कालाते च्युतो, जबूद्वीपपूर्वविदेहविशोभितमगलावती विषयविराजितरजतमहीधरोदक्तटघटितगधर्वपुरनाथस्य वासवस्य वि-द्याधरेंद्रस्य प्रभावतीदेव्या महीधरो नाम सुत· संजात । क्रमेण तस्मि-

न्वासवे महीधराय राज्यं समर्प्यारविंदानिकटे मुक्तावलिनामतपस्तप्त्वा मोक्षलक्ष्मीमाटीकमाने, प्रभावत्या च रत्नावलिनामतपश्चिरं चरित्वाच्युतकल्पमासाद्य प्रतीन्द्रपदं भजमानायां, सोऽय विद्याधरराज्य परिपालयन् सिद्धविद्यः, पुनर्विद्यापूजोद्यतो मंदराचलनंदनवनपूर्वदिगाश्रितचैत्यालयमधितिष्ठमानः, पुष्करार्धद्वीपपश्चिमभागपूर्वविदेहविलसितवत्सकावतीविषयप्रभाकरीपुरीमंडनायमानस्य विनयंधरयोगींद्रस्य निर्वाणपूजां निष्ठाप्य महामेरुमागतवता मया लोचनगोचरीकृत एव बोधितो बभूव ॥

मामच्युतेंद्रमवगच्छ नभश्चरेंद्र !
त्वं पूर्वमाविरभवो ललितांगदेवः ॥
स्नेहोऽस्ति मे भवति मातृचरे गरिष्ठ—
स्तद्भद्र संत्यज मुधा विषयाभिलाषं ॥२९॥

इत्युक्तमात्र एव निर्विण्णो नभश्चरेंद्रो महीकंपे ज्येष्ठसुते न्यस्य पितराज्यभारं, बहुभिः खेचरेंद्रैः साकं जगन्नंदनमुनिनिकटे कनकावलिनामतपस्तप्त्वा प्राणतेंद्रपदं प्राप्तो, विंशतिसागरस्थितिस्तत्रानुभूतविविधभोगस्ततश्च्युत्वा, धातकीखंडद्वीपपूर्वाशाविशोभितपश्चिमविदेहगंधिलविषयायोध्यानगराधिपतेर्जयवर्मणः सुप्रभायामजितंजयनामपुत्रः समजायत ॥

ततश्च जयवर्मजगतीपाले राज्यलक्ष्मीं निजनंदने समर्प्य अभिनंदनपार्श्वे निरभानाम्लवर्धनं नाम तपस्तप्त्वा शाश्वतं पदमुपगते सुप्रभायां च सुदर्शनां गणिनीमासाद्य रत्नावलिमुपोष्याच्युताधिपतिपदं प्राप्तायां, सोऽयमजितंजयोऽप्युदितचक्ररत्नोऽभिनंदनजिनपदारविंद

वंदमानः, पापास्रवद्वारपिधानेन पिहितास्रव इत्यन्वर्थनामधेयं दधानश्चिरकाल राज्यसुखमनुभुंजानो मदीयधर्मबोधनविजृंभितवैराग्यभारो द्विंशतिसहस्रैर्नृपकुमारैः सह मंदरस्थविरमुनिसमीपे दीक्षामुपादाय, सञ्जातावधिज्ञानसंपन्नचारणर्द्धिरवरतिलकमहीधरे भवत्यै जिनगुणसंपत्तिश्रुतज्ञानाख्यमनशनव्रत स्वर्गसुखसाधनं प्रतिपादयामास ॥

मालतीसुकुमारांगि ! माननीयगुणे सुते ! ।
ततोऽस्मद्गुरुरेवासीत्तवाप्यभ्यर्हितो गुरुः ॥३०॥

एवं गुरुस्नेहेन मया पूजितेषु द्वाविंशतिललितांगेषु चरमस्तव भर्ता प्राग्भवे महाबलः स्वयंबुद्धोपदेशविलसितदेवभूयो ललितांगास्त्रिदिवच्च्युतः सोऽयमिदानीमस्माकं प्रत्यासन्नतमो बंधुः संजातस्तव च भर्ता भविष्यति ॥

अन्यद्वक्ष्याम्यभिज्ञानं कन्ये ! धन्यगुणे शृणु ॥
यस्याः कचाः कटाक्षाश्च शिलीमुखमदापहाः ॥ ३१ ॥

पुरा किल युवाभ्यां दंपतीभ्यां समन्वितोऽहं युगंधरतीर्थलब्धसम्यग्दर्शनाभ्यां ब्रह्मेंद्रलांतवाभ्यां तच्चरितं पृष्ट एवमवोच ॥

जंबूद्वीपपूर्वविदेहाविलसितवत्सकावतीमंडलमंडनायमानसुसीमानगराधिपते अजितजयनामधेयस्य सचिववरिष्ठादमृतमतिनाम्ना सत्यभामाया जात. प्रहसितस्तत्सखा च विकसितस्तावेतौ सदा सहचारिणौ तर्कपारावारतलस्पर्शिधिषणौ वादकलाप्रवीणौ कदाचिन्मतिसागरनाममुनिवरमुपागतेननरपतिना सह समागतौ सकलनिजशंकाकलंकानिका

---

यस्याः कचाः शिलीमुखा भ्रमराः तेषां मदापहाः गर्वनिराकरणनिपुणा भृंगेभ्योऽप्यतिकृष्णवर्णाः । कटाक्षाश्च बाणगर्वहरणचणाः । 'शिलीमुखो भवेद्भृगे मार्गणे च शिलीमुखः इति विश्वलोचनः ।

रगभीरया गिरा जीवतत्वनिरूपणं कुर्वाणं मुनिपूषणमानम्य गृहीतसं-यमौ सुदर्शनमाचाम्लवर्धन चोपोष्य, विधाय च निदान बलदेववासु-देवयोः कालांते महाशुक्रे षोडशसागरोपमस्थितिसहिताविंद्रप्रतीन्द्रौ संजातौ, चिरममरसंपदमनुभूय स्वायुरते च्युतौ, धातकीखडसुदर पश्चिममदरपूर्वविदेहविराजितपुष्कलावतीविषयमडितपुडरीकिणीपुरीं पालयतो धनजयभूपालस्य जयतायशस्वतीदेव्योस्तनयौ महाबलातिबलनामधेयौ बलकेशवावजायेता ॥

तदनु, राज्यं परिपालयन्महाबलः केशवस्यातिबलस्य वियोगेन संजातवैराग्यः समाधिगुप्तमहामुनिपार्श्वे तपस्तप्त्वा प्राणतेंद्रपद प्राप्तस्तत्र विंशतिसागरोपमस्थितिरमरलक्ष्मीमनुभूय, धातकीखडपश्चिममदर पूर्वविदेहवत्सकावतीविषयप्रभाकरीपुरीनाथस्य महासेनमहीपालस्य वसुंधरादेव्यां जयसेनाव्हयः पुत्रः सजातः, क्रमेणोद्भूतचक्ररत्न सुचिर पालितमहीवलयः सीमदराजिनपादपयोजमूले जैनीं दीक्षामासाद्य भावितषोडशभावन कलितानिरतिशयतपसा ग्रैवेयकेषूर्ध्वमध्यमे प्राप्याहमिंद्रपद, तत्र त्रिंशत्सागरोपमस्थितिर्दिव्यानुभोगाननुभूय ततोऽवतीर्य, पुष्करार्धद्वीपपूर्वमंदरपूर्वविदेहसंगतमंगलावतीविषयाविशोभितरत्नसचयराजधानीमाधिवसतोऽजितंजयभूपालस्य वसुमतीनामदेव्यां युगंधर समजायत ॥

सोऽयं युगंधराजिनः सुरमौलिराजी
नीराजितांघ्रियुगलः सकलाभिनंद्यः।
कैवल्यसंपदमुपेत्य महीयतेऽद्य

१ मुनिपूषण मुनिसूर्य । २ राजी पंक्तिः ।

भव्यांबुजातवनमंडलचंडभानुः॥ ३२ ॥
तदेति मद्वचः श्रुत्वा बहवो दर्शनं श्रिताः॥
युवां च धर्ममंत्रेशौ परमं समुपागतौ ॥ ३३ ॥
हरिणांकगर्वहरणाननांबुजे !
पिहितास्रवस्य महितामरांचितं ।
अयि केवलोदयमहं महागुणे !
समयागता वयमपि स्मरस्यदः ॥ ३४॥
सुते स्मरसि किं भद्रे स्वयंभूरमणोदधिं ।
क्रीडाहेतोर्विजेप्यामो गिरिं चांजनसंज्ञकम् ॥ ३५ ॥

इति कर्णरसायनं पितृवचनमाकर्ण्य युष्मत्प्रसादविभवेनैतत्सर्वं जानामि किंतु शिरीषकोमलांगो ललितांगः क जातो न ज्ञायते इति प्रतिपादितवतीं श्रीमतीं पुनश्चक्रधरः प्रत्युवाच ॥ भद्रे! युवयोः स्वर्गस्थयोरेवाच्युतकल्पात्प्राक्प्रच्युतोऽहं यशोधरमहीपतेर्वसुधरायां देव्यां वज्रदंतः सजातः । युवां च स्वर्गाच्च्युतौ यथायोग्य राजपुत्रौ जातौ।

ललितांगि! तृतीयेऽन्हि ललितांगवरेण ते।
संगमो भविताद्यैव तद्वार्तां वक्ति पंडिता ॥ ३६ ॥
पैतृष्वस्रीय एवायं तव भर्ता भविष्यति ।
अपांगसुंदरो यस्त्वन्नेत्रांत इव भासते ॥ ३७ ॥

इति प्रतिपाद्य समागच्छतीं तव मातुलानीं वयं प्रत्युद्गच्छाम

---

१ भव्या एव अंबुजातवनं कमलवनं तस्य मंडलं समूहः तस्मै चंडभानुः सूर्यः । २ हरिणांकश्चंद्रः ३ पितृष्वसुः अपत्यं पुमान्पैतृष्वस्रीयः। ४ अपांगो मदनस्तद्वत्सुंदरः नेत्रपक्षे अपांगः कटाक्षस्तद्वत्सुंदरः ।

इति चक्रधरे, तत्क्षणमखंडितमतिः पंडितापि समागत्य कार्यसिद्धिसंतुष्टहृदयालवालसजातप्रीतिलतापुष्पायमाणमदस्मितसुंदरवदनारविंदा प्रियतमोदंतश्रवणकौतुकविलासवती श्रीमती प्रीतिमधुरमेव कथयांबभूव॥

**कोमलांगि! कुसुमास्त्रपताके! । त्वन्मनोरथतरुः फलितोऽभूत् ।**
**सप्रपंचमरुणाधरबिंबे! व्याहरामि तदिदं शृणु कन्ये! ॥ ३८ ॥**

इति किल पट्टकमादाय महापूतजिनालयमासाद्य, तत्र विचित्रपट्टकशालायां पट्टकं प्रसार्य, बहून्समागतान्पंडितमानिनः पतिब्रुवान्गूढार्थसंकटे प्रकटितमोहान्विदधानायां मयि स्थितवत्यां, विद्याधरि! कचवद्भ्रमराहितः, फालवत्सुपर्वराजसुंदरः, कुचमंडलवत्सरसाहितवृत्तिः, भ्रूयुगलवद्धर्मोल्लसद्गुणः, आदिकंदः शृंगारपादपस्य, रोहणगिरिः सकलगुणमणिगणस्य, प्रभवशैलः कंदर्पकथाकल्लोलिनीनां, वसंतसमयो वैदग्ध्यसहकारस्य, आदर्शतलं सौजन्यमुखस्य, आलवालतलं विद्याल-

---

१ कुसुमास्त्रो मदनः तस्य पताकेव इति कुसुमास्त्रपताका। २ भ्रान्तिरहितः पक्षे भ्रमराणां हितः । ३ फालो भालप्रदेशः यथा भालप्रदेशः सुपर्वराजवत् पूर्णिमाचन्द्रवत्सुंदरस्तद्वत् अयमपि पूर्णिमाचन्द्रवत्सुंदरः। अथवा सुपर्वाणो देवास्तेषां राजा इन्द्रस्तद्वन्मनोहरः ४ सरसाहितवृत्तिः सरेण पुष्पहारेण सहिता वृत्तिर्यस्य पक्षे सरसा शृंगारादिसहिता वृत्तिर्यस्य । ५ यथा भ्रूयुगलं शोभमानधर्मान्वितं गुणः धनुरिव शोभते तथायं नायकः रत्नत्रयात्मकधर्मोपेतस्त्यागादिगुणयुक्तः। 'गुणो रूपादिसत्त्वादिसंध्यादिज्येन्द्रियादिषु । सूदेऽप्रधाने त्यागादौ मौर्व्यां सूत्रोदरे ॥' 'धर्मः स्यात्स्त्रियां पुण्ये धर्मो स्यात्स्वभावयोः । उपमायां यमाचारवेदान्तेऽपि धनुष्यपि । ' इत्युभयत्र विश्वलोचनः । ६ आम्रवृक्ष. ।

तानां, स्वयंवरपतिः सरस्वत्याः, संकेतसदनं कीर्तिलक्ष्म्याः, कुलभवनं शीलसंपदां, कोशगृहं सौंदर्यधनस्य, त्रिभुवनरमणीयाकृतिस्तव भर्तुः र्यो वज्रजंघस्तत्र समागत्य भगवतमर्हन्तमभ्यर्च्य पट्टकशालामाससाद।

निर्वर्ण्य पट्टकमिदं निरवद्यरूप
स्तत्पट्टके विलिखितं स्फुटमाह सोऽयं ॥
राजानमुज्जयति यस्य मुखं प्रतापो
हंसं यशश्च विमलं किल राजहंसं ॥ ३९ ॥
यस्य चंद्रनिभा कीर्तिर्हासहृद्यं मुखांबुजं ॥
करश्च समरारंभे चंद्रहासमनोरम. ॥ ४० ॥
सुमाभं यस्य हसितं भ्रूयुगं चापसन्निभं॥
राजते यः शरीरेण सुमचापमनोहरः ॥ ४१ ॥
यः कांचनश्रियं धत्ते यशो यस्याचलं भुवि ॥
यो धैर्येण महिम्ना च कांचनाचलसन्निभः ॥४२॥
यस्यांबरोज्ज्वलो देहो मणिभिश्च विराजितः।
यश्चकास्ति प्रतापेन चितांबरमणिः सदा ॥ ४३ ॥
प्रभया तुलयत्येष स्वर्णमब्जं करेण च
प्रभाकरेण तुलयन्प्रतापं यो विराजते ॥ ४४ ॥

इदं किल श्रीप्रभविमान अयं च श्रीप्रभाधिपतिरहं ललितांगः। इयं च तत्पार्श्वे सौंदर्यसीमाभूमिः स्वयंप्रभा। अयमैशानःकल्पः।

---

१ चंद्रं २ हंसं सूर्यं ' हंसौ सूर्यमरालयोरिति विश्वलोचनः। ३ चंद्रहासः खड्गः। ४ सुमचापो मदनः। १३ अंबरं आकाशं तस्य मणिः सूर्यः॥ ६ सूर्येण।

इयमिंदिंदिरचुंबितकुसुमसंदोहतुंदिलमंदारवीथी । इद पद्मसर. । अयं कृतकाचलः अत्र मंदारवाटिकाया प्रणयकोपपराङ्मुखी राकाशशिमुखी स्वयप्रभा समीरसमाहतकल्पलतेव विलिखिता । इय चावयो· कनकाचलतटक्रीडा दर्शिता।इतःकिल देदीप्यमानमणिप्रकाडमडलमंडितकाडपटावृते शय्यागेहे निगूढप्रेमबंधवधुरेर्ष्यावशेन मणिनूपुरझंकारमनोहरेण चरणेन मां बलात्ताडयती, किंकिणीकलकलवाचालेन कांचीकलापेन सात्ववचनपेरण सखीजनेनेव संरुद्धा, प्रणयकोपपरीतस्य मम पादे पतती स्वयप्रभा दर्शिता । अत्राच्युतेंद्रसमायोगगुरुपूजादिकं विस्तरेण लिखित । अत्र किल चित्रमंडपे प्रणयकोपकलितस्वांतायाः कांताया. पादयो. पतन्कर्णोत्पलेन ताड्यमानोऽहं प्रदर्शितः । इतश्च तरुणकिसलयमनोरमचरणकलितलाक्षामुद्रया मधुरस्थले विरचित लाछन न प्रकटित । इह च कांताकपोलफलकयोर्विचित्रपत्राणि विलिखन्नहं न प्रकाशित । इद स्वयप्रभादेव्यैव विलिखितं स्यादथवास्मत्क्रीडा साक्षीभूततया रतिदेव्या यद्वात तद्वृत्तांत सर्वमनुभूनवत्या स्वर्गश्रियेति वितर्कयन् वज्रजघ. क्षण पर्याकुलो मूर्च्छामुपजगाम ॥

परिवारजनै. कृतोपचाररतरुणस्तत्र चिरेण लब्धसंज्ञः ॥
कलशस्तानि!किन चित्रमेतल्लिखितं स्यादिति! मामपृच्छदेषः।४५।
एवं पृष्टाहमिदमवोचम् ॥

त्वन्मातुलान्यास्तनया तव स्त्री तटित्सवर्णा तरलायताक्षी॥
सा श्रीमती यन्मुखमेव जातो नभोगतां त्यक्तुमिवोडुराजः॥४६॥

---

१ भोगराहितता पक्षे आकाशनिवासित्वं । २ उडूना नक्षत्राणां राजा प्रभुः उडुराजः नक्षत्रपतिश्चंद्रः ।

कुटिलभ्रूयुगं तस्या धनुश्चंद्रमणीमणिः ॥
न तिष्ठेत तदा कन्या मुखभागे मनोहरे ॥
अहोरिवद्युक्तमेवेदं सा कन्यापि ग्रहोज्ज्वला ॥
तुलां त्यजति लोलाक्षी कुसुमेषुपताकिका ॥
रोमराजिर्हरिनिभा तालहृद्यं स्तनद्वयं ॥
तनुकांतिश्च तन्वंग्या हरितालमनोहरा ॥

तस्याः किल कुभींद्रकुंभसन्निभ. कुचकुंभबिंवो, बिंबसहोदरोऽधरो, अतुलित नितंबवलय, वलयाचित करकिसलयं, सलयमधुरा गानकला, कलानिधिमदहर स्मितकुसुम, कुसुमचापतूणीरसकाश जंघायुगलं, युगायता भुजलता, लतातसुकुमारा तनुसपादिति ॥

सा किल तरुणीमणिर्भवदीयवियोगहुतवहताता कांता किंचिदप्यधो न पश्यतीति जले विषबुद्धिं करोति । मदने मारमतिं तनुते । मद्रानिलेऽप्याशुगमनीषा वहति । मृदुलनलिनेषु विषजातधियं विधत्ते । मलयजरसेऽशुचिमतिं कुरुते । शीतकर सागरजातं तनुते । परिवादध्वनि

१ धनु. कोदड. पक्षे धनूराशिः ( ज्योतिःशास्त्रे ) २ कन्या तनया पक्षे कन्याराशि. । ३ तुला उपमा पक्षे तुलाराशि । ४ हरिनिभा सर्पसदृशी । ' हरिर्गोविदवारींद्रचद्रवातेंद्रभानुषु । यमाहिकापिभेकाश्वशुकेऽश्वोकान्तरे त्विषि । इति विश्वलोचन. ॥ ५ हरताळः इति महाराष्ट्रभाषाया ॥ ६ अग्निपीडितां । ७ गरलं पक्षे जल । ' विषं तु गरले जले ' इति विश्वलो० । ८ मारो मदनः मृत्युश्च । अक्षिभागेऽप्यथो मारो विघ्ने मृत्यौ स्मरे वृषे ' इति विश्वलो. । ९ आशुगो बाणवातयोः ' इति विश्वलो. । १० विषाज्जलात् जात विषजात पक्षे गरलजात । ११ सागरजातं समुद्रजातं पक्षे सा श्रीमती गरजात विषादुत्पन्न मनुते । १२ परिवादोऽपवादः पक्षे परिवादध्वनिर्वीणाध्वनिः ।

न शृणोति । अलंकाराभियोग. शत्रोरस्त्विति जल्पति । कुसुमकुञ्ज परिशोभितरुज जानाति । लीलामराले हंसबुद्धिमादधाति । उपवनमयूरेषु शिखिमतिमारचयति । क्रीडाशुके पतगमनीषा विशेषयति ॥

अनंगरागं हृदयं मृगाक्ष्या अनंगदं बाहुयुगं बिभाति ॥
तारुण्यतस्त्वद्विरहाच्च भद्र ! विहारहृद्यं कुचकुंभयुग्मं ॥ ४९ ॥
इत्युक्तोऽयं वज्रजंघो मृगाक्ष्या मज्जन्मोदांभोधिमध्ये चिराय
पाणौ कृत्वा पट्टकं तावकीनं भादादन्यत्पट्टकं ते विचित्रं ॥ ५० ॥

तदनु, पंडितया समर्पित पट्टकमादाय सा कुरंगशावविलोचना निर्वर्ण्य चिरं, संतापसंतप्ता चातकीव जलदकालं, मरालीव शरन्नदीपुलिनं, भव्यावलीव अध्यात्मशास्त्रं, कलकंठिकेव कुसुमितसहकारवनं, निर्जरपरिषदिव नंदीश्वरद्वीपं, प्रीते. परां काष्ठामाटिटीके ॥

चक्रधरोऽपि पंडगवलतरंगितसाविधप्रदेशः समासाद्य अर्धपथं, समागतं भगिनीपतिं वज्रबाहुं, भगिनीं वसुंधरां, भागिनेयं वज्रजंघं च विलोक्यातिमात्रप्रीतः सदनमानीय सत्कृत्य च, कदाचिदतिसंतोषवशादिमां गिरमुदाजहार ॥

उदारपुत्रोऽपि भवान्गृहं मे यत. समागादनुदारपुत्रः ॥ ततो
नृप ! प्रीतिनटी तनोति लास्यं मनोरंगतले मदीये ॥ ५१ ॥

---

१ अलंकाराभियोगं—भूषणसंबंध पक्षे अलं अतिशयेन काराभियोगः कारागृहसंबंधः । २ परिशोभि—तरुजं तरोर्वृक्षाज्जायते इति तरुजं पक्षे समुत्पन्नरोगं । ३ हंसो मरालः पक्षे रविः । ४ सूर्यबुद्धिं ५ क्रीडायोग्य पक्षे हारेण विनापि रमणीयं ६ न उदारः पुत्रो यस्येति विरोधः पक्षे अनुगता दारा पुत्राः य सः

ममालये यदिष्टं ते महीरमण ! वर्तते ॥
तद्गृहाण मयि प्रीतिर्यदि तेऽस्त्यनियंत्रणा ॥ ५२ ॥

इति वज्रदत्तचक्रधरेणोक्ते वज्रबाहुनृपे " देव! तव प्रसादात्सर्वं ममास्त्येव किंतु कन्यारत्नं वज्रजंघाय प्रतिपादनीयं " इति बहुधा प्रार्थितवति, तत्प्रार्थनामंगीकुर्वाणो वसुधारमणस्तदानीमेव विवाहमंडपारभाय महास्थपतिमादिदेश ॥

महास्थपतिरातेने मंगलं मणिमंडपं ।
यत्संपदं विलोक्येव क्वापि लीनं त्रिविष्टपम् ॥ ५३ ॥

सुमनोवृंदवासिततया, निर्जरमनोहर्षकतया, सहस्रनेत्रानंदसदायकतया, सदाखंडलसद्वनिताजनमनोरमतया च त्रिविष्टपमिदं मंडपं च तुल्यं ॥

तत्सर्वजनमनोज्ञं इदं त्रिदशजनमनोज्ञं, तत्सौधालयख्यातं इदं सुरालयख्यातं तदिति न दृष्टांतमर्हति ॥

यत्किल पुरविराजितं, गोपुराविराजितं, रत्नशोभाचितं, चिरत्न-

---

१ सुमनसां देवानां वृंदः समूहः पुष्पसमूहश्च । २ निर्जरसः देवाः जरारहिताश्च युवान इत्यर्थः । ३ सहस्राणि नेत्राणि यस्य सः सहस्रनेत्र इंद्रः पक्षे सहस्राणि नेतॄणां सहस्रनेतारः तेषां आनंदसंदायकः । अनेकनायकसंतोषकतयेत्यर्थः ४ आखंडलस्य शक्रस्य सद्वनिताः पतिव्रताः स्त्रियः तासां समूहेन मनोरमतया । पक्षे सदा अनिशं अखंड अतिशयेन लसन्त्यश्च ताः स्त्रियश्च ताभिर्मनोरमतया । ५ स्वर्गः । ६ त्रिदशाः देवाः पक्षे त्रिंशज्जनसुंदरं । ७ सुधाया अयं सौधः सौधश्चासौ आलयश्च सौधालयः तेन ख्यातं अमृतगृहेण ख्यातं इदं मंडपं अमृतगृहेण विख्यातं । पक्षे राजसदनविख्यातं 'सौधोऽस्त्री राजसदनमित्यमरः । ८ मंदिरागृहविख्यातं पक्षे सुराणां देवानां आलयं गृहमिति विख्यातं

शोभांचित, आनंतोल्लासक, जनतोल्लासक च । यच्च मणीद्धं, रमणीद्ध, नरमणीद्ध, किंनरमणीद्ध । अत्युज्ज्वल, महास्थपतेर्मत्युज्ज्वल सुमत्युज्ज्वल, वसुमत्युज्ज्वल च ।

महापूतख्याते जिनभवनवर्ये नरपतिः
महापूजां कृत्वा विमलशुभलग्ने शुभदिने ॥
सुतायाः स्वस्रीयस्य च विधिवदानंदभरितः
शुभस्नानं चक्रे मणिगणलसन्मंडपवरे ॥ ५४ ॥
ततो दिव्यांबरधरं तद्वधूवरमादरात् ।
प्रसाधनगृहे रम्ये प्राङ्मुखे विनिवेशितम् ॥ ५५ ॥

तदा लक्ष्मीमतिर्निजसुतायाः श्रीमत्याः नेपथ्यकल्पनाय प्रवृत्ता कचभरोऽस्य सुदृग्मौलिलालितोऽपि मलिनस्वभावतया कुटिलस्वभावतया च सदा जडभृद्रुचिं वहति, मधुपमैत्रीं करोति, तथा चामरव्रजं विकरोति बंधोऽस्य युक्त इतीव बध विदधाना, परिशोभितमालोत्कर्षासहमपि तत्कचनिचयं परिशोभितमालोत्कर्षेण भूषयंती, निर्मलसरोवरे नीलोत्पलमिव, सितावुजे लोलबमिव, सुधाकरे कलंकमिव, तन्मुखे मृगमदतिलक परिकल्पयंती, नासातिलकुसुमाचलोदाचिततुषा-

---

१ आनताना नम्राणा उल्लासक आनदप्रद । २ नरमणयो मनुष्यश्रेष्ठास्तैरिद्ध उज्ज्वल । ३ सुष्ठु मतयो येषा ते सुमतयस्तैरुज्ज्वल । ४ वसुमत्या भूम्योज्ज्वल । ५ सुदृग्मौलिलालितोऽपि स्त्रीमस्तकेन लालितः पक्षे सम्यग्दृष्टिलालित इति ध्वनिः । ६ जडभृद्रुचिं डलयोरभेदात् जलभृद्रुचिं इति जलभृतो मेघास्तद्वत्कान्ति । पक्षे जडभृतः अज्ञानिनः इत्यर्थः। ७ मधुपो भृगः मद्यपश्च । ८ परिशोभितपुष्पमालोत्कर्षं ।

रविंदुसुदर मौक्तिक नासाग्रभागे विदधाना, विवेकवार्तानभिज्ञस्य क्षमाधरकलितविद्वेषस्य सूर्यादरांचित साधुचक्र निंदत. सततमूर्ध्वमेव पश्यत' कुचमंडलस्य विमुक्ताहारता न युक्तेति मत्वा किल तत्र मुक्ताहार घटयती, रतितंत्ररहस्यप्रतिपादकमनोहरारावशोभिततया कामस्य रसनैवेय लेखनप्रमादेन 'रशना' जातेति कविजनैरुत्प्रेक्ष्यमाणा रशनां मध्यदेशे तन्वाना, कुसुमशरसर.कलहसकौ हसकौ पदयुगले परिकल्पयती चिराय ता मंडयामास ॥

महनीयप्रभापूरैर्महार्घमणिभूषणैः ।
पुत्रं सा भूषयामास वज्रजंघं वसुंधरा ॥ ५६ ॥
एवं मंडितविग्रहौ परिलसद्वारांगनानर्तन-
व्यालोलन्मणिनूपुरारवभरैः संपूरिते मंडपे ॥
नानावाद्यरवप्रकारमुखरे पृथ्वीश्वरैर्वेष्टिते
वेद्यां तत्र निवेशितौ सपदि तौ मोदं दशां तेनतुः ॥ ५७ ॥

तदनु, सरभसमितस्ततःप्रधावितस्य प्रतीहारजनस्य पादघट्टनजनितकुट्टिमध्वनिबंधुरेण, वारांगनाचरणरणन्मणिनूपुररवमेदुरेण, प्रचलितान्तःपुरजनमणिकलापमनोरमकलकलकमनीयेन, तत्पुर सरकचुकीजनकलितसमर्द्दनिवारणपरवचननिर्भरेण, मंत्राविन्मुखकमलविनिर्गलन्निर्गलद्दंभरिशब्दपावनेन, विचित्रनानाविधवादित्ररवविराजितेन, विविधबंदिसंदोहपापठ्यमानविरुदप्रपंचकलितेन, पौरवधूकलगानमनोहरेणोत्स-

१ आचार्ये विश्वासयुक्त रविप्रीतियुत । २ सज्जनसमूहः पक्षे उत्तम चक्रवाकपक्षिण ३ विगतमुक्ताहारता त्यक्त–आहारता । ४ नूपुरौ । ५ द्वारपालजनस्य । ६ स्तुतिपाठकसमूहः ।

चक्रोल्लाहलेन, मुखरितदिगंतरे तन्मडपांतरे सिद्धस्नानांबुपूतमरतकं वधूवरं नवरत्नखचितचामीकरपट्टके विधाय चक्रधरः शुभे मुहूर्ते कंकेलिपल्लवचेष्टितमुखभाग कनककरकं करेण बभार ॥

ततो न्यपाति क्षितिपेन तस्य करांबुजाते करकांबुधारा ॥
दीर्घे भवन्तौ सुखजीविनौ स्तामिति ब्रुवाणेव सुदूरदीर्घा॥५८
जग्राह पाणौ नरपालपुत्रीं कुरंगशावामललोलनेत्रां ॥
तस्याः करस्पर्शनसौख्यभारमीलद्दृगब्जः स हि वज्रजंघः॥५९॥
श्रीमती तत्करस्पर्शात्स्वेदबिंदूनधारयत् ॥
चंद्रकांतशिलापुत्री चंद्रांशुस्पर्शनादिव ॥ ६० ॥

अपरेद्युरसौ वज्रजंघः करदीपिकासहस्रैर्दिवसायमाने प्रदोषे श्रीमत्यानुगम्यमान. प्रभयेव प्रभवधुरागत्य मेरुमिव महापूतजिनालय प्रदक्षिणीकृत्य, कृतेर्याशुद्धिर्जिनभवन प्रविश्य, तत्र गंधकुटीमध्ये विलसत भगवतमभिषेकपुर.सरं पूजयित्वा कृतार्चनस्तत्स्तोत्र प्रारेभे॥

भवभयनिशारंभे निद्राजुषां निखिलात्मनां
जिनवर ! भवान्धत्से स्वापांगमुज्ज्वलमौषधं ॥
वयमिह ततश्चिंतं निर्णिद्रमीश भजामहे

---

१ सुवर्णपट्टके (सोन्याचा पाटा इति महाराष्ट्रभाषायां) २ अशोककिसलय। ३ सुवर्णकलश । ४ जग्राह पाणौ कुरुवंशदीपो जीवंधरः खेचरकामिनींता ॥ निमीलिताक्षश्च बभूव सौख्य स्पर्शाहित द्रष्टुमिवांतरगे ॥ ५ गंधर्वदत्ता तत्पाणिस्पर्शेन समजायत ॥ वधूरिन्दुकरस्पर्शाच्चंद्रकांतशिला तथा ॥ इतीमं श्लोकद्वय जीवंधरचम्पूकाव्यस्थ उपरितनश्लोकद्वयमनुसरति ॥

परिहृतमहद्दुःखास्पृष्टाः प्रबोधमहो चिरं ॥ ६१ ॥

पदं तव जिनाधिप ! प्रथितबोधवारां निधे ! ॥
भजन्भजाति जातु चिन्न विपदं नराः सांप्रतम् ॥
इदं तु परमद्भुतं शिरसि तत्परागं सदा॥
सुविभ्रदपरागतां व्रजाति भव्यवर्गो भुवि ॥ ६२ ॥

इति स्तुत्वा देवं विमलमुनिवृंदं च विनमन् ॥
अयं राजीवाक्ष्या सह पुरमगात्पुण्यचरितः ॥
पुरे द्वात्रिंशच्छ्रीमुकुटधरसाहस्रकलितं ॥
महं विंदन्भोगान्सुचिरमनुभुक्ते स्म विविधान् ॥ ६३ ॥

कदाचिदय वज्रजंघ कंदर्पबोधितिकनकनाराचधाराभिरिव श्रीमतीशयकुशेशयानिर्गलिताभिः कुंकुमजलधाराभिः पिंजरीक्रियमाणदेहो लाक्षारसच्छटाप्रहारपाटलितदुकूलो मृगमदजलविंदुशबलचंदनस्थासक. कनकयत्नधराश्चिक्रीड ॥

कदाचन पुरदर इव सुमनोमंडित सोऽयं श्रीमत्या सह लकितापसर: कुलमसेवत।

पश्यतो मे हरान्नेत्रं जहार मृगलोचना॥
इति मत्वेव सुरते जहार सुदृशोऽम्बरं॥ ६४ ॥

अपूर्वपाणिग्रहणे प्रक्लृप्ते नृपेण देव्याः किल केलिगेहे॥
लाजायितं मन्मथहव्यवाहे मर्दाद्गलन्मौक्तिकहारकेण ॥ ६५ ॥

---

१ पद चरण। २ चरणधूलिं। ३ रागद्वेपराहित्य। ४ नाराचो बाणः। ५ शयो हस्तः। ६ श्वेतरक्ती भूतवसनः। श्वेवरक्तस्तु पाटल इत्यमरः ७ शवल मिश्र। ९ इद्रपक्षे सुमनोमडितः देवैः परिभूषितः, वज्रजघपक्षे कुसुमैरलकृतः।

जंघापत्योर्मेलने केलिगेहे शंपावल्लीमेघयोर्यद्वदभ्रे ।।
आसीत्तत्रामेघसंपातवृष्टिस्तस्या जज्ञे मानसस्य प्रहर्षः ।।६६।।

अरुणविलसद्बिंबं ग्रस्तं तदा सहसा बला-
दहह पतितं मेरोः श्रृंगाच्च तारगणैस्ततः ।।
तिमिरनिकरव्याप्तश्चंद्रो बभूव नवोत्पल-
द्वितयमभवल्लीलालोलं तयोः स्मरसंगरे ।। ६७ ।।

निरंजनत्वं नयनांचलेऽभूद्विरागतांभूलनयने मृगाक्ष्याः ।।
नीव्यां कबर्यामपि बंधमुक्तिः पत्या समं दर्पककेलिकाले ।।६८।।

एवं जिनेंद्रमहिमोत्सवपात्रदान-
पुत्रोद्भवादिविभवैः सरसस्य तस्य ।।
कांतासखस्य कमनीयविशालकीर्तेः
कालो महाननविदितो निरगाच्च तत्र ।। ६९ ।।

---

१ यद्वन्नभसि शंपावल्लीमेघयोर्मेलने सति मेघागमनाज्जलवृष्टिर्भवति तथा तयोः श्रीमतीवज्रजंघयोः क्रीडागृहे मेलने जाते सति मेघानामनागमनेऽपि वृष्टिरभवत् । स्वेदोदकेन गात्रक्लिन्नताऽभवत् । तथा वज्रजंघसंयोगेन तस्या मानसं हर्षयुतमभवत् ।।

२ तयोर्मदनकदने अलक्तरागेण शोभमानं तस्या बिंबं—अधरबिंबं ग्रस्तं वज्रजंघेन तच्चुंबितमित्यर्थः । तदा मेरोःश्रृंगात् तारकासमूहैःपतितं अर्थात् वज्रजंघेन दृढमाश्लिष्टायास्तनतटाद्धारगतमौक्तिकानि त्रुटितानीति भावः । चंद्रस्तिमिरनिकरव्याप्तो बभूव— अर्थात् विपरीतरते प्रवृत्तायास्तन्मुखं केशैर्व्याप्तं बभूवेति भावः । नवनीलकमलद्वयं लीलया चंचलं बभूव—रतिसुखानुभवने तस्या नेत्रे अर्धमीलितेऽभवतामित्यर्थः ।।

३ पापरहितत्वं गतकज्जलत्वं च । ४ अपगतरागत्वं अपगतापराधत्वं च । ५ कर्मबंधान्मुक्तिः नीविविस्रसनं केशपाशशैथिल्यं च ।

वज्रबाहुरदात्कन्यां वज्रजंघसहोदरीं ॥
अनुंदरीं चक्रवर्तिसुतायामिततेजसे ॥
चारुलक्षणसंपन्नश्चक्रिसूनुस्तया बभौ ॥
ज्योत्स्नयेव सुधासूतिः प्रभयेव च भास्करः ॥

इति श्रीमदर्हद्दासकृतौ पुरुदेवचंपूप्रबंधे द्वितीयस्तबकः ॥



# तृतीयः स्तबकः

अथ कदाचिच्चक्रधरकलितपूजामत्कारपूजितश्चक्रिप्रतिपादितां महतीं सेनां कोशदेशादिकं च प्रतिगृण्हानया श्रीमत्या पुरस्कृत. पित्रादिपरिवृतः, प्रस्थानसमूचकभेरीभाकारपूरितभुवनतलो वज्रजघोऽनुव्रजितुमायातान्मंत्रिपुरोहितपौरवर्गान्नातिदूरे विसृज्य पुरस्तरंगितचतुरंगबलेन सह स्वपुरं प्रति निर्जगाम ॥

महीतल तदा व्योमतलं चोच्चैःकरेणुभिः
पुपूरे वज्रजंघस्य प्रयाणे परिजृंभिते॥ १ ॥

शंखास्तदानीं पृतनाधिराजैरापूर्यमाणा द्वितयं निभेदुः ॥
शं तद्वियोगासहसज्जनानां वयस्ययूनां रभसेन खं च॥२॥

एव प्रयाणपटुतरबलेन सह तोरणकेतुजालादिभिरलकृतमुत्पलखेटक पुर समासाद्य तत्र गगनतलचुंबिसौधसमाश्रितानितम्बिनीजनकरोन्मुक्तकुसुमलाजोपहारसुरभितसाविधप्रदेशो नरपतिभवनमाससाद ॥

श्रीमती रमयामास वज्रजंघो विशालधीः ॥
मातापितृवियोगेन खिन्नां कोशघनस्तनी॥ ३ ॥

सापि कुरगलोचना सखीनामग्रगण्यया पडितया नृत्यगीतादिविनोदमनुभवन्ती क्रमेण पचाशत यमान्पुत्रान्प्रासोष्ट । अथ कदाचिन्मणिसौधाग्रविराजमानो वज्रबाहुमहीपतिः सुरापगाडिडीरखडमिव, व्योमलक्ष्मीहसितमिव, नभस्तरुकुसुमपुजमिव, गगनकाननविहरमाणस्तबेरंममिव, कचन शारदनीरदं तत्क्षणविलीन त विलोकमानो वैराग्यायत्त-

---

१ अनुसर्तु । २ उच्चैर्हस्तिभिः उच्चैर्धूलीभिश्च । ३ सेनापतिभि' ४ सुख ५ आकाश । ६ देवनदीफेनसमूहमिव । ७ करिणमिव ।

चित्तस्तनयसमर्पितराज्यभारः पञ्चशतपृथ्वीपतिभिर्वीरप्रभृतिभिःश्रीमती-तनयैश्च साकं जैनीं दीक्षामुपादाय क्रमेण कैवल्यमुत्पाद्य परं धाममासताद ॥

पैत्रिकीं संपदं प्राप्य प्रकृतीरनुरंजयन् ॥
वज्रजंघोऽपि वसुधां पालयामास सादरं ॥ ४ ॥

अथ वज्रदतचक्रधरोऽपि स्वामिव सुरसभाव अतिदक्ष सभासंनिवेशमासाद्य सद्वृत्तरत्नमंडित सिंहासनमलकुर्वाणस्तत्र समागतेन वनपालेन समर्पितं सामोदं भ्रमरहितं पद्ममाजिघ्रस्तद्गंधमुग्धमधुकर निशि तत्र सरुद्धं मृत निरीक्ष्य भृश निर्विण्णो, विरतविषयाभिलाषस्त नयाय विदितनयाय अमिततेजोभिधानाय राजलक्ष्मीं प्रतिपादयितुकामस्तस्मिन्सानुजे तप.साम्राज्यमेव वहुमन्वाने, तत्सुताय पुंडरीकाय वदनजितपुडरीकाय वालाय राज्यमर्पयित्वा षष्टिसहस्त्रैर्देवीभिस्त्रिंशत्सहस्त्रैर्नरपालैः सहस्त्रैः सुतै. पडितया च परिवृतो यशोधरयोगींद्राशिष्य गुणधरनामान मुनिवरमाश्रित्य सत्वरमदीक्षिष्ट ।

ततश्चक्रधरापायाल्लक्ष्मीमतिरगाच्छुचम् ॥
अनुंदर्या सहोष्णांशुवियोगान्नालिनी यथा ॥ ५ ॥
बाले राज्यभरोऽर्पितः कथमयं वालो मया रक्ष्यते ।
पुण्यत्पक्षवलादृते किमधुना कर्तव्यमित्युत्कटं ॥
चिंताक्रांतमतिः खगाधिपसुतौ लक्ष्मीमतिः प्राहिणोत् ।
पत्रप्रोतकरंडकौ कुशलिनौ श्रीवज्रजंघं प्रति॥ ६ ॥

तदनु करडकास्थितपत्रार्थज्ञानेन निश्चितसकलोदतः किंचिच्चिंताक्रांतस्वान्त· काश्यपीकान्तः कान्तायै श्रीमत्यै यथानिश्चय वृत्तमिदं निवेद्य, समाश्वास्य च समाकुलमानसां तां, कृतप्रयाणोद्यमः पुरतो विसृज्य चिंतागतिमनोगतिविख्यातौ दूतमुख्यौ, मतिवरानंदधनमित्रा-

कंपननामधेयैर्महामन्त्रिपुरोहितश्रेष्ठिचमूपतिभिः परिवृतश्चलन्तमपरमिव जलधिं बल पुरोधाय प्रस्थानभेरीरवपूरितभुवनोदरः प्रतस्थे ॥

रंगत्तुरंगमतरंगवती करींद्र—
याद:कुला बहुललोलकृपाणमत्स्या ॥
श्वेतातपत्रघनफेनविराजमाना
सा वाहिनी नरपतेः प्रजवं चचाल ॥ ७ ॥

घोटाटोपस्फुटितवसुधाधूलिकापालिकाभिः
शोषं याते दिवि भुवि लसत्सिंधुयुग्मे क्षणेन ॥
शुंडोद्गच्छज्जलकणभरैर्दानपूरैश्च वेगा—
अन्वर्थाख्यैस्तदिदमुभयं पूरितं सिंधुरग्रैः ॥ ८ ॥

ततश्च विकचकु सुमनिकरमत्युच्चतया तारागणमिव शिखरदेशलग्नमुद्वहद्भिः पादपैरुपशोभिनां निजसेनामिव महिषीसमाधिष्ठिता-कचुकीपरिवृता चमरजातविराजिता च वनवीथिमासाद्य, तत्र कस्य-

१ उच्चलदश्वा एव तरगा यस्याः । नदीपक्षे उच्चलदश्वा इव तरगा यस्याः सा । २ करीन्द्रा एव याद:कुल जलचरसमूहो यत्र । नदीपक्षे करीन्द्रसममजलचरप्राणिधारिणी । ३ बहुचंचलकृपाणाः खड्गाः एव मत्स्याः यस्या।नदीपक्षे बहुचंचलखड्गसममत्स्यधारिणी । ४ श्वेतातपत्राण्येव घनफेना यस्या । नदीपक्षे श्वेतातपत्रसमघनफेनयुता । ५ वाहिनी नदी सेना च । ६ दिवि भुवि च अश्वखुरविदारितमहीसमुत्थधूलीराजीभिः स्वर्णदीमहीनदीयुग्मे शोषं गते सति शुडानिर्गतजलकणैर्गंडस्थलनिर्गतमदजलैश्च तदिदं नदीयुग्म यथार्थनामधेयैः सिंधुरैः पूरित ॥ ७ वज्रजघनृपसेना राज्ञीसमाधिष्ठिता । वनपक्तिश्च महीषीभि: सैरिभैः समधिष्ठिता । सेना कचुकीपरिवृता, अन्त:पुराधिकृतपुरुषैर्युक्ता वनवीथी च कचुकिभिः सर्पैः परिवृता। ९ चमरजात प्रकीर्णकं वनवीथिपक्षे चमराणा मृगविशेषाणा जात समूहः ।

चित्सरःसमीपदेशे शीतलसुरभिमंदगंधवहमधुरसलिलसन्निवेशे नरपालः सेनां परितो विधाय शिबिरमासमाद॥

कांतारचर्यां संगीर्य पर्यटंतौ मुनीश्वरौ॥
ददर्श धरणीपालः स तत्रांबरचारिणौ ॥ ९ ॥

उत्थाय वेगेन धराधिराजः कृतांजलिर्भक्तिसमर्पितार्घ्यः॥
प्रणम्य कांतासहितो मुनीन्द्रौ प्रवेशयामास निजं निकाय्यं१॥

तत्र विशुद्धमतिरसौ नरपतिर्दमधरसागरसेननाम्ने प्रथितमहिम्ने शिथिलितभवनिगलाय मुनियुगलाय तस्मै विधिवदाहारं दत्वा,रत्नवृष्टिपुष्पवृष्टिगगनतरंगिणीतरंगवाहिमंदमारुतदुंदुभिध्वनिजयघोषणारूपाणि पंचाश्चर्याणि विलोकमान., प्रणम्य संपूज्य मुनिपुंगवौ विसृज्य विबुध्य च कांचुकीयादिमौ चरमात्मतनुजौ, ससंभ्रम श्रीमत्यासह सप्रीत· पुनस्तन्निकटमासाद्य, प्रथमं गृहस्थधर्मं स्वस्य श्रीमत्याश्च भवावलिं च श्रुत्वा सादरमेव पप्रच्छ॥

स्वबंधुनिर्विशेषा मे स्निग्धा मतिवरादयः॥
मुनीश्वर! भवानेषां मह्यं ब्रूहि दयानिधे! ॥ ११ ॥
इति पृष्टो नरेंद्रेण मुनींद्रस्तुष्टमानस.॥
अवधिस्पष्टनयन इदमाचष्ट सादरं॥ १२ ॥

अथ मतिवरो जंबूद्वीपपूर्वविदेहवत्सकावतीविषयप्रभाकरीपुर्यामतिगृद्धो नाम नरपालो जातस्तत्र बह्वारंभपरिग्रहवैभवविजृंभितनरकायुष्य पंकप्रभानाम्नि नरके संजातनारकभावो दशसागरोपमास्थितिस्ततो निष्पत्य पूर्वोक्तनगरसमीपविलसिते निजधननिक्षेपपर्वते शार्दूल समजायत॥

---

१ सेनानिवेशस्थान।

कदाचिद्विजिगीषयाप्युत्थितं निजानुजं निवर्त्य तन्महीधरमधिवसंतं मानुजं प्रीतिवर्धनं नाम महीरमणं, पुरोधाय मेधावतामग्रणीरत्र मुनीश्वराहारदानेन तव महान्लाभो भवितेति प्रतिपाद्य मुनीश्वरसमागमोपायमप्येवं कथयांबभूव ॥

प्रकीर्यंतां पुष्पैरलिकुलकलारावमुखरैः
पयोभि सिच्यंतां घुसृणरससमिश्रैः सुरभिभिः॥
पुरीरथ्या पृथ्वीपतिरयमितो यास्यति मुधा
ध्वजान्बध्वा सौधेष्वपि तनुत भोस्तोरणगणान्॥१३॥

इति पुरे घोषणायां दत्तायां तथालंकृतं नगरं अप्रासुकत्वेनात्मनो विहारायोग्यं मत्वा कांतारचर्यां समीर्य मुनिवरो यास्यति ॥

एवं पुरोधोवचनमंगीकृत्य धरारमणस्तथा कुर्वाणस्ततः क्रमेण समागताय पिहितास्रवनाममुनिवराय विधिवदाहारं दत्वा निर्लिंपनिपातितां वसुधारां विलोकमानस्तदानीमये धरारमण अस्मिन्महीधरे भवदीयदानवैभवविजृंभितरत्नवृष्टिनिरीक्षणक्षणजनितजातिस्मृतिः संत्यक्तशरीराहारः कोऽपि शार्दूलः शिलातले निविष्टः सोऽयं त्वयोपचर्यतां । अयं किल पुरुनंदनो भूत्वा चक्रवर्तितामेत्य परं धाम व्रजिष्यति इति मुनिवरव्याहारविस्तृतविस्मयो मुनिना समं गत्वा शार्दूलस्य सपर्यां विस्तारयामास ।

तदनु, तेन मुनिशार्दूलेन स्वर्गी भवेति कलितकर्णजापः शार्दूलोऽयमष्टादश दिवसैस्त्यक्ताहारपरिग्रहो दिवाकरप्रभाविख्यातविमाने श्रीमदैशानकल्पे दिवाकरप्रभो नाम देवो बभूव ॥

तदानीमुदारमिममाश्चर्यं दृष्ट्वा तस्य नरपालस्य चमूपतिसचिवपुरोधसः परामुपशांतिमुपागता नृपदानानुमोदेन कुरुष्वार्याः सजा-

ता: कालांतेन नवैशानकल्पप्रभाकांचनरूपिताख्येषु विमानेषु प्रभाकर-कनकाभप्रभजननामधेयाः सुराः समजायत ॥

ललितांगभवे युष्मत्परिवारामरानिमान् ॥
चतुरश्चतुरान्धीरान्धुरीणानवधारय ॥१४॥

ततः प्रच्युत्य शार्दूलचरः सुरः श्रीमतीसागरयोः सुतस्तव मंत्री मतिवरः समजायत ॥

प्रभाकरश्च नाकात्प्रच्युत्य आर्जीवापराजितसेनान्योर्नंदनोऽय-मकंपनो बभूव ॥

कनकप्रभस्तु तस्मात्प्रच्युतोऽनंतमतिश्रुतकीर्त्योः सुतोऽयमा-नंदस्तव पुरोधा बभूव ॥

प्रभंजनस्ततः प्रच्युत्य धनदत्ताधनदत्तयोस्तनूजो धनमित्रस्तव श्रेष्ठी समजायत ॥

इमां मुनींद्रस्य गिरं निशम्य तौ दंपती धर्मरतावभूतां॥
पप्रच्छ भूयोऽपि मुनीन्द्रमेनं धरापतिर्विस्मयदत्तचित्तः ॥१५॥
अमी नकुलशार्दूलगोलांगूलाःससूकराः ॥
कस्मादत्रैव तिष्ठंति त्वन्मुखार्पितदृष्टयः ॥ १६ ॥
इति राज्ञानुयुक्तोऽसौ चारणर्षिरुवाच तं ॥
वचश्च यस्य तेजश्च भास्वद्वर्णं विराजते ॥ १७ ॥

अयं किल व्याघ्रो भवान्तरे एतद्देशविशोभितहस्तिनानगरे धनवतीसागरदत्तयोर्वैश्यदंपत्त्योरुग्रसेननाम्ना सूनुर्भूत्वा वसुधाभेदस-न्निभादप्रत्याख्यानक्रोधात्संजनिततिर्यगायुष्यः, पृथ्वीपतिकोष्ठागारे

१ यस्य वचो भास्वद्वर्णं उज्ज्वलाक्षरसंपन्नं, यस्य तेजश्च उज्ज्वलकान्त्या युक्तं विराजते ।

नियुक्तान्पुरुषान्निर्भर्त्स्य घृततंडुलादिक वेश्याजनेभ्यो ददानस्तद्वृत्तांतज्ञेन राज्ञा वधितश्चपेटचरणाघातादिभिर्मृत्वा इह व्याघ्रो बभूव ॥

एष किल वराह. पूर्वभवे विजयनामपुरे वसंतसेनामहानंदयो राजदपत्योर्हरिवाहननामा पुत्रो भूत्वा अप्रत्याख्यानमानमास्थिसम बिभ्राणः पित्रानुशासनमसहमानः शिलास्तभजर्जरितमस्तक आर्तो मृत्वा वराहोऽजायत ॥

अय खलु वानर· पूर्वभवे धान्यनाम्नि नगरे सुदत्ताकुबेरयोवैंश्यदंपत्योर्नागदत्तनामा नदन सजातो मेषशृगसमामप्रत्याख्यानमायामाश्रितः कदाचिन्निजानुजाविवाहार्थ एव स्वापणे विलसितस्वापतेयमवायामाददानाया तद्वचनोपायमजानानस्तिर्यगायुर्वशेन गोलागूलो बभूव ॥

अय किल नकुलो भवान्तरे सुप्रतिष्ठितपुरे धनलोलुपः कादविकनामा लोलुपो भूत्वा, चैत्यालयनिर्मापणोद्यतस्य नरपालस्येष्टिकावेष्टिपुरुषान्वशीकृत्य तेषामपूपादिप्रदानेन धनेष्टिकासंचय सगृण्हानस्तत्र कासुचित्सुवर्णशलाकाविलोकनेन विवर्धितलोभ. कदाचित्पुत्रमिष्टिकासग्रहणाय नियोज्य स्वसुताग्राम गत्वा तत. प्रतिनिवृत्तस्तथा नाचरितवत· पुत्रस्य शिरस्तटं लगुडताडनादिभिः स्वचरणाभ्या सम निर्भिद्य राज्ञा च घातितो नकुलत्वमप्रत्याख्यानलोभेन समुपाजगाम ॥

युष्मद्दानसमीक्षणेन परमं मोदं गतास्तत्क्षणं
प्राप्ताः पूर्वभवस्मृतिं प्रतिगता निर्वेदमुर्वीपते ! ॥
त्वद्दानानुमतेः कुरुष्वातितरां बद्धायुषोऽमी मृगाः
निःशंकाः पुरतः स्थिताः कुतुकिता धर्मामृतास्वादने॥१८॥

---

१ कादविकः कांदव अपूपादिभक्ष्यं तत्पण्यमस्येति कांदविकः ॥

अमी किल भवदीयाष्टमभवपर्यन्तं भवतैव सम दिव्यमानुषगोचरान्भोगाननुभूय तत. सेत्स्यति ॥ इयं च श्रीमती भवत्तीर्थे दानतीर्थप्रवर्तकः श्रेयान्कुमारो भूत्वा शाश्वत पदमवाप्स्यति ।

इति सुवचनमाध्वीं कर्णपात्रेण पीत्वा
मुनिवरमभिवंद्यावासमागान्महीशः
तदनु च मुनिवर्यौ मेरुसंकाशधैर्यौ
विदधतुरुरुशोभौ वातमार्गप्रवृत्तिं ॥ १९ ॥

भूपतिश्च तद्गुणाख्यानमसुत्कंठितचेतास्तद्दिन तत्रैवातिवाह्यापरेद्युर्बलेन सह प्रस्थाय प्राविश्य च पुंडरीकिणीं पुरीं शोकाक्रांतमतीं लक्ष्मीमतीमनुदरीं च समाश्वास्य निरुपप्लव च राज्य मन्त्रिमंडलमंडिते पुंडरीके नरपुंडरीके निवेश्य यथापुरं निजपुरं अभिजगाम ॥

किमेष सुरनायकः किमु सुमोल्लसत्सायकः
किमाहिततनुर्मधुः किमुत भूमिभाजो विधुः ॥
इति क्षितिपतिः पुरीसुकुचकुंभबिंबाधरी–
गणेन परिशंकितो गृहमगाद्गजैर्मंडितः ॥ २० ॥

स किल तत्र विचित्रप्रतीकशोभाभिरामया रामया सह समस्तऋतुविस्तारितानिस्तुलभोगाननुभूयमान. कदाचन मदनसहकार–सहकारपल्लवतल्लजसमुल्लसन्मधुरसमये वसंतसमये, मधुमासलक्ष्मीमिव

१ वातमार्गो नभः । २ नरेषु पुंडरीकः श्रेष्ठः तस्मिन् । ३ सुमैः पुष्पैरुल्लसन्तः सायका यस्य सः पुष्पबाणो मदन इति भावः । ४ शरीरं ५ आम्रवृक्षः ।

तिलकशोभितसुरुचिरसालकाननां सद्यस्तनस्तवकाविराजितां कलकंठा-लापमनोहरां तां नितंबिनीं रमयन्माल्लिकामताल्लिकाविकासमूले निदाघ-काले, धारागृहेषु चंदनद्रवसिक्तांगीं तां तन्वंगीमालिंगन्प्रावृषेण्यदि-नसेषु वर्षालक्ष्मीमिवांबरोल्लासितपीनपयोधरामभ्रंमिता सर्ज्जघना तटिद्रू-त्कांतिविराजिता च तामविरलं परिरंभमाणः, शरदि च शारदलक्ष्मी-मिव राजहंसमनोरमां रमयन्नयमनल्पसमयं गमयामास ॥

कदाचन मणिप्रभातरलहेममंचांचिते ।
तया सह धरापतिः पिहितरत्नवातायने ॥
स वै शयनमंदिरे सुरभिधूपधूमावृते ।
सुषुप्तिसुखमन्वभूत्स्तनतटाग्रजाग्रत्करः ॥ २१ ॥
तत्रागरुलसद्धूपनिरुद्धश्वासनिर्गमौ
दंपती तौ निशामध्ये दीर्घनिद्रामुपेयतुः ॥ २२ ॥

अथ जंबूद्वीपसुपर्वपर्वतोत्तरदिशासमाश्रितेषु मधुमैरेयादिरसभेद-प्रदानप्रवणमद्यांगैः, पटहमर्द्दलतालकाहलझल्लरीशंखप्रमुखनानावादित्र-विधानैरातोद्यांगैर्मंजीरकेयूरहाररुचकमुकुटांगदादिभूषणावितरणप्रवीणैर्भू-षणांगैर्नानाविधमाल्यकर्णपूरादिदानशौंडैर्माल्यांगैर्निजतेजोविजृंभितमदो

१ वसंतलक्ष्मीः तिलकवृक्षशोभितमनोहरसालवृक्षवना । श्रीमत्यपि सौभाग्यतिलकशोभितमनोहरा चूर्णकुंतलसहितमुखा । मधुलक्ष्मीः नूतनस्तवक-पुष्पगुच्छविराजिता भवति, श्रीमत्यपि स्तनरूपगुच्छकविराजिता। मधुलक्ष्मी कलकंठालापमनोज्ञवरा २ प्रावृषेण्यलक्ष्मीः अंबरे नभसि उल्ल-सितपीनपयोधरा शोभितनिबिडाभोदा । इयं च श्रीमती अंबरे वस्त्रे उल्ल-सितौ पीनौ पयोधरौ स्तनौ यस्या एतादृशी । ३ अभ्र इता पक्षे अभ्रमिता भ्रान्तिरहितेत्यर्थः ४ सर्जा घना यस्या सत् जघनं यस्या इति च । ५ राजहंसाः मरालास्तैर्मनोरमा । राजसु-नृपेषु हंसः श्रेष्ठो वज्रजंघो नृपतिस्तस्य मनोरमा । ६ मरणं । ७ मद्य । ८ वादित्रांगैः । ९ लज्जावशेन

क्षवशेनेव तत्र प्रवेष्टुमक्षमान्सूर्याचंद्रादीन्विदधानैर्मणिप्रदीपदानैर्दीपांगै-र्दिवाकरनिशाकरधिक्कारधीरैर्ज्योतिरंगैस्तुंगतमहर्म्यमंडपसभागृहहाटक-मयनाटकशालास्थूललक्ष्यैर्गृहांगैः, सुधामपि सुधां शर्करामपि शर्करां[1] विदधानान् वीर्यवृद्धिकारानाहारान्ददानैर्भोजनांगैः, स्थालचषकभृंगा-रकरकादिवितरणोदारैर्भाजनांगैश्चीनपट्टदुकूलप्रावारपरिधानप्रदानचतुरै-र्वस्त्रांगैश्च दशप्रकारैः केवलमवनीसारैः कल्पपादपवारैः परिशोभि-तेषु, चतुरंगुलसमितया धरणीरमणीविधृतहरितांशुकशंकालपादिकया तृण्यया विराजितेषु, सुरभिसचारसमीरकिशोरसमानीतकुसुमरजः-पुंजपिंजरितनभोभागतया सदानिततवितानेष्विव विलसमानेषु उत्तर-कुरुषु श्रीमतीवज्रजंघौ पात्रदानप्रभावेण जंपतितां सपादयामासतुः ॥

प्रागुक्ताश्च मृगा जन्म प्रापुस्तत्रैव भद्रकाः ॥
पात्रदानानुमोदेन परमं पुण्यमाश्रिताः ॥ २३ ॥

तत्र च मतिवरादयस्तद्वियोगविजृम्भितशोकास्तदानीमेव दृढधर्म-नाम्नो मुनिवर्यस्य समीपे जैनीं दीक्षामाश्रित्य दुश्चरं तपस्तप्त्वाधो-ग्रैवेयकस्याधोविमानेऽहमिंद्रपदमासेदुः ॥

छायासु कल्पकतरोः कमनीयमूर्ती
तौ दंपती ललितकामकलाविलासैः ॥
चिक्रीडतुर्महितकल्पकपादपस्य
लक्ष्म्यां प्रदत्तनयनौ नयनाभिरामौ ॥ २४ ॥

कदाचिदथ व्योमपथप्रकाशमानं सूर्यप्रभदेवविमानं दृष्ट्वा जातिस्मरतामासाद्य प्रबुद्धः प्रियया सह दूरादागच्छतौ चारणमुनींद्रौ समीक्ष्य नलिन्या समं दिवस इव सूर्यप्रतिसूर्यौ प्रत्युद्गच्छन्नानदबाष्प-

---

१ पानपात्र - समूहे । ३ तृणानां समूहस्तृण्या । ४ पतिपत्निभाव

विदुसदोहैस्तत्पादौ क्षालयान्निव प्रणम्य सुखोपविष्टौ तावेव पप्रच्छ ॥

अहो मुनीन्द्रावरविंदबंधू युवां ध्रुवं यन्मम चित्तपद्मं ॥
भावत्कपादागमजातबोधं प्रसादमाध्वीकरसं प्रसूते ॥२५॥

भगवंतौ ! युवां कुत्यौ कुतस्त्यौ किं नु कारणं ॥
युष्मदागमने ब्रूतमिदमेतत्तथाद्य मे ॥ २६ ॥

इति प्रश्नं समाकर्ण्य मुनिर्ज्यायानभाषत ॥
दंतांशुमंजरीपुंजैर्दिशः सुरभयन्निव ॥ २७ ॥

अहं किल पुरा भवदीयमहाबलभवे भवत्सचिवाग्रणी स्वयंबुद्धः कर्मनिर्बर्हणस्य जैनधर्मस्योपदेष्टा त्वद्वियोगाज्जातनिर्वेदो दीक्षित्वा सौधर्मकल्पविलसमाने स्वयप्रभविमाने मणिचूलनामा सुरः सजातः साधिकसागरोपमायुष्कः ततः प्रच्युतो जंबूद्वीपपूर्वविदेहपुष्कलावती-विषयपरिशोभितपुंडरीकिणीनगर्यां सुंदरीप्रियसेनाह्वययो राजदंपत्योः प्रीतिंकराख्यातो ज्येष्ठः सुतः समभवं ॥

ततश्च प्रीतिदेवनाम्ना मम कनीयसानुजेन सह स्वयप्रभजिनसमीपे जैनीं दीक्षामासाद्यास्थाय च तपोबलेन चारणपद पालदानप्रभावेण भवंतामिहसंजातमवधिविलोचनेन विज्ञाय प्रबोधयितुमागतौ स्तः ।

महाबलभवे भवान्मम सुबोधनाद्दर्शने
न शुद्धिमुपसेदिवान्प्रबलभोगकांक्षावशात् ॥
ततो विमलदर्शनं विदितनिर्वृतेः साधनं
गृहाण गुणवारिधे ! तव तु लब्धकालोऽधुना ॥२८॥

शमाद्दर्शनमोहस्य सम्यक्त्वादानमादितः
जंतोरनादिमिथ्यात्वकलंककलितात्मनः ॥ २९ ॥

---

१ पादा. किरणाश्चरणाश्च ।

निर्भिद्य मिथ्यात्वमहांधकारमुदेति सद्दर्शनतिग्मरश्मिः॥
तेन प्रबोधं विमलं चरित्रमाराधयन्राजति भव्यजीव.॥ ३० ॥

जीवादिमोक्षपर्यंततत्वश्रद्धानमंजसा॥
त्रिभिर्मूढैरनालीढमष्टांगं विद्धि दर्शनम् ॥३१॥
तस्य प्रशमसंवेगावास्तिक्यं चानुकंपनं॥
गुणाः श्रद्धारुचिस्पर्शप्रत्ययाश्चेति पर्ययाः ॥३२॥

तथा जिनेंद्रसंदर्शितमोक्षमार्गादिषु शंकापनयन, भोगाकांक्षासु विमुखता, मुनिजनतनुषु विचिकित्साविरहः,त्रिमूढतापाय , उपगूहनं,- सद्धर्मपदच्युतभव्यसंहातिस्थापन, विमलगुणवत्सलता, श्रीमज्जैनशासन-प्रभावना चेति अष्टौ गुणा सम्यक्त्वावयवाः प्रतिपादिता. ॥

मुक्तिश्रीहाररत्नं महितमहिमसद्दर्शन धत्स्व चित्ते
यद्धृत्वा भव्यजीवो हृदि सपदि चिरं सौख्यमुद्वेलमेति॥
अंब! त्व चाविलंबं भज भवजलधेर्दुस्तरस्यापि नावं
सद्दृष्टिं स्त्रैणहेतोः किमिति हृदि सदा खिद्यसे चारुनेत्रे! ॥३३॥

इति मुनिवचनेन प्रापतुः पुण्यवंतौ
सपदि विमलसम्यग्दर्शनं दंपती तौ ॥
दधुरधिहृदयं ते व्याघ्रमुख्यार्यवर्या
नतमुनिपदपद्मा दर्शनं काललब्ध्या ॥ ३४ ॥

एव बोधयित्वान्तर्हिते चारणयुगले किंचिदुत्कंठितमानसौ सम्यक्त्वभावनापरिशीलनलालसौ सुचिर भोगाननुभूय जीविताते सुखोज्झितप्राणौ तौ जायारमणौ पुण्यवशेन गृहाद्गृहांतरमिवैशानकल्पमासाद्य देवभूयमुपजग्मतु ।

तत्र किल विचित्रसुखैकताने श्रीप्रभविमाने वज्रजंघार्य. श्रीधर-नामा सुरवर्य.. श्रीमत्यार्या च स्वयप्रभविमाने तत्समाननामधेयो-

देव[1], शार्दूलार्यश्च तत्कल्पविलसिते चित्रागदविमाने चित्रागदामर[1], सूकरार्यश्च नंदाख्यविमाने मणिकुंडलीत्रिदशः, कौशार्यश्च नंद्यावर्तविमाने मनोहरसुमना, नकुलार्यश्च प्रभाकरविमाने मनोरथनिर्लिंपः समजायत॥

पुण्योदयेन फलितं सुरलोकसौख्य-
मासेदुषामतितरां द्युसदाममीषां॥
श्रीमत्सरस्थितिरुरोभुवि कल्पकद्रु-
क्रीडावने च समभूद्बत नैव चाभूत्॥३५॥

नाकनारीमुखांभोजभ्रमरः श्रीधरः सुरः॥
बुभुजे सुचिरं भोगान्कंदर्पसदृशाकृतिः॥ ३६॥

यद्देव्यो यश्च सन्मुख्यः सुमनोर्जनितांतभा॥
श्रीसारसदृश पुण्यद्विलासगमना अहो! ॥ ३७॥

यश्च यत्परिवाराश्च सुशोभननमनाः सुराः॥
सामोदा सुमनोमाला यस्य पार्श्वेऽप्युरःस्थले॥ ३८॥

---

१ देव. । २ देवाना ३ देवाना वक्षसि शोभायुक्तकठाभरणस्थितिः कल्पद्रुवने सरोवरस्थितिः । पुनर्देवाना वक्षसि लक्ष्म्या मात्सर्यस्थितिः कल्पद्रूपवने सपदो मात्सर्यस्थितिर्नाभूत्॥ ४ देव्यः प्रशस्तवदनाः सुरोऽय पुन. सता मुख्यः । ५ सुमनोज—नितातभाः शोभनमदन इवाधिककातिमान् । देवीपक्षे सुमनःसु देवीपु जायते नितात भाः कातिर्यासा ताः । देवतासु अधिककातिसपन्नाः अस्य सुरस्य देव्य इत्यर्थः । ६ लक्ष्मीसारस्य सदृशा देव्यः । संपत्सारेण सदृशोऽय सुरः । ७ पुण्यद्विलासेन गमन गतिर्यासा ताः । पुण्यद्विलास गच्छति मनो यस्य सः पुण्यद्विलसगमनाः विपुल सुखासक्तचित्तः इति भावः । ८ सुष्ठु शोभन मनः यस्य एतादृशो देवः। यत्परिवारश्च सुष्ठु शोभन नमन येषा ते । ९ यस्य पार्श्वे सुमनोमाला देवपंक्तिः च यस्योरसि सुमनोमाला पुष्पमाला॥

उच्चोरःस्थलमाश्रिता मम हठान्नेतं मनोज्ञास्मितो—
ल्लासैर्हारसितांशुकं च हरते नित्यं कलानां निधिः॥
भूषाभिः किल लोकबांधववसून्मुष्णाति तृष्णाकुले-
त्यालोच्यैव जहार वस्त्रममरो देव्या रते श्रीधरः॥३९॥

अथ श्रीप्रभाद्रिविलसमानमुत्पन्नकेवलज्ञानमहिमानं जगत्प्रीतिकर प्रीतिंकरं निजगुरुमासाद्याभ्यर्च्य च त सर्वज्ञं महाबलभवेऽस्मन्मंत्रिणस्त्रयः कुदृष्टयः कीदृशीं गतिं प्राप्ता इति पप्रच्छ॥

इति पृष्टः समाचष्ट सर्वज्ञः सुरवंदित.॥
अस्यान्तर्ध्वांतसंतानमपाकुर्वन्वचोंऽशुभिः॥ ४०॥

पुरा खलु भवति स्वर्गं गते लब्धबोधेषु चास्मासु दुर्मृतिं प्राप्तौ संभिन्नमहामती गाढाधतमसपद निगोदास्पदमुपजग्मतुः। शतमतिश्च मिथ्याज्ञानप्रभावेन द्वितीयनरके वाचामगोचरदुःखमनुभुंक्ते॥

इति वचनमुदारं कर्णदेशे वितन्वन्
शिरसि चरणयुग्मं तस्य भक्तिं च चित्ते॥
शतमतिमातिखिन्नं धर्मनिष्ठं विधातुं
सपदि नरकमागात्तद्द्वितीयं सुरोऽयं॥ ४१॥

या कल शर्कराप्रभा नामा जाज्वल्यमानज्वलनशिखाप्रतप्तभूमिभागा, दुःसहदुःस्पर्शस्फुलिंगकणसंगतवातपरीताम्बरतलचुंबिविगलदम्बुधरनिपतिततप्ताशुवृष्टिदुरवगाहा, विततविषवल्लीसललितासिपत्रवनपातितप्रहरणमयपत्रविदीर्णप्रतीकनारकजनाक्रोशमुखरितदिगंतरा संतप्तायोमयपुत्रिकासमालिंगितनारकतरंगितदुःखाक्रंदनघोरा, मस्त्राग्निदीपितनवायसकंटकपरिमेदुरशाल्मलीवृक्षेषु क्रोधाकारै परै समारो-

१ शरीर।

प्यमाणानामूर्ध्वाधःकृष्यमाणानां च पुरुषाणां क्षतजपरीवाहपरीतमहामार्गाः, नानर्त्यमाननारकककरकलितशूलाग्रकीलिताभ्रमागभ्रम्याणानां शोणितारुणविग्रहाणां केषांचिद्गात्रखंडविकीर्णा विराजते ॥

तत्रावलोक्य शतबुद्धिमसौ सुराग्र्यः
किं भद्र वेत्सि खचरेंद्रमहाबलं मां ॥
मिथ्यात्वदुर्णयवशात्तव दुःखमेतत्
प्राप्तं विधेहि हृदि दर्शनमित्युवाच ॥४२॥

इति बोधितोऽथ गृहीतसम्यक्त्वधृतिः शतमतिः कालान्ते निरयान्निर्गत्य, पुष्करार्धद्वीपपूर्वार्धपरिशोभितप्राग्विदेहप्रकाशमानमंगलावतीविषयसंगतरत्नसंचयनगरमधितिष्ठतोः सुंदरीमनोहरनामधेययो राजदंपत्योस्तनयो जयसेनाभिधानः संजातः । पाणिग्रहणप्रारंभे करुणाकरेण श्रीधरामरेण नारकीं वेदनां बोधितो निरस्तविषयाभिलाषस्तत्क्षणमेव यमधरं नाम गुरुवरं समाश्रित्य, दुश्चरणतपश्चरणदक्षः कालांते ब्रह्मेन्द्रो भूत्वा सुस्पष्टावधिलोचनस्तस्माल्लोकादागत्य कल्याणमित्रं श्रीधरमतिमात्रं पूजयामास ॥

तदनु श्रीधरोऽपि स्वर्गाच्च्युत्वा जंबूद्वीपप्राग्विदेहमहितमहावत्सकावतीविषयविराजमानसुसीमानगरपतेः सुदृष्टिनरपतेः सुंदरनंदायाः सुविधिनाम सूनुरजायत ॥

---

१ रुधिर । २ पुनः पुनः नृत्यतो नानर्त्यमानाः । ३ देहानां

सोऽयं कलानिधिरिति प्रथितोऽपि भास्वान्
सौम्योऽपि मंगलतनुः सुमना नरोऽपि ॥
बाल्ये रराज सुविधिर्मदवर्जितोऽपि
श्रीसुप्रतीकविदितोऽपि च सार्वभौमः ॥ ४३ ॥
प्राणोऽपि जगतां सोऽयं प्रचेता राजनंदनः ॥
नरसार्थहिता यस्य सरसार्थहितापि गीः ॥ ४४ ॥

स किल यथाकालं परिगृहीतसत्कलत्रः पितुरुपरोधेन प्राप्त-राज्यभारश्चक्रधरस्याभयघोषाह्वयस्य स्वस्त्रियोऽस्य चक्रिसुता मनो-रमां उद्वाह्य तया सह रममाणो राज्यमनुशशास ॥

यस्य च पुरं रंगोज्ज्वलं तुरंगोज्ज्वलं चतुरंगोज्ज्वलं च निरं-

१ सोऽयं नृपः कलानिधिरपि चंद्रोऽपि भास्वान् सूर्य इति विरुद्ध। तत्परिहारः चतुःषष्टिकलानिधिरपि प्रकाशमान्॥सौम्योऽपि मंगलतनुः सोमस्य अपत्यं पुमान् सौम्यः बुधग्रहः।बुधग्रहोऽपि मंगलग्रह इति विरुद्धं। तत्परिहारः सौम्योऽपि मनोरमोऽपि मंगलतनुः शोभनशरीरः। नरोऽपि सुमनाः देव इति विरुद्ध। तत्परिहारः सुष्ठु शोभनं मनश्चित्तं यस्य सः। मदवर्जितोऽपि श्रीसुप्रतीकोऽपि सार्वभौमः यः मदजलवर्जितोऽपि श्रीसुप्रतीकदिग्गजः सार्वभौमदिग्गजश्चेति विरुद्धं। तत्परिहारश्चायं यःगर्वरहितः श्रिया शोभमान प्रतीक शरीरं यस्य तथा सार्वभौमो नृपः। २. यः प्राणोऽपि वायुरपि प्रचेता वरुण इति विरुद्ध। परिहारश्च यः जगज्जीवनस्तथा प्रकृष्टं चेतो मनो यस्येति विद्वानिति भावः। यस्य सरसार्थहितापि गीर्नरसार्थहिता इति विरुद्ध। तत्परिहारश्चायं शृंगारादिरसयुक्ता पदार्थप्रतिपादिनी हितकारिणी तद्वाणी.नराणां सार्थः समूहस्तद्धितकरीति च। ३रंगोज्ज्वलं-सभामंडपोज्ज्वलं ४ चतुरंगोज्ज्वलं अश्वकरिरथपत्तिभिश्चतुःसाधनैः सैन्यैर्युक्तं।

हृद्या वनीपहृद्या अवनीपहृद्याश्चारामा ॥

आर्याधिकानंददो भार्याधिकानंददः सभार्याधिकानंददश्च पृथ्वीपति ॥
मारविलसित कुमारविलसित सुकुमारविलसित च यस्यांतःपुरं ॥
वरतोल्लासिता नवरतोल्लासिता अनवरतोल्लासिता च वनिताजनता॥
यस्य च यशोमाला राजमनोरमा सुरराजमनोरमा च ॥

यस्मिन्शासति महीवलये सुवृत्तस्य कुचस्य कठिन इति पीडा, अपापस्य कूपस्य विरस इति खनन, सुगुणस्य मुक्ताहारस्य अंतश्छिद्र इति भंग., महातपास्थितिमाहितस्य सरोजस्य सपंक इति मीलनं, सुमनोभूषिताना कुंतलाना वक्रा इति आकर्षण, सुरक्तस्य वनितोष्ठस्य अधर इति खंडनम् ॥

---

१ यस्य आरामा नीपहृद्या कदंबवृक्षमनोज्ञाः, वनीपहृद्याः वनपालकमनोरमाः, अवनीपहृद्या अवनीं पान्ति इति अवनीपा राजान' तैर्मनोहरा'। २ मदन ३ बालको युवराजश्च । ४ उत्कृष्टता। ५ नूतनसंभोग। ६ अनवरत नित्य । नित्यानवरताजस्रोति अमर' ७ यस्मिन्नृपे शासति सुवृत्तस्य सुचरितस्य पीडा नास्ति पर सुवृत्तस्य शोभनवर्तुलाकारस्य कुचस्यैव कठिनत्वात्पीडा अस्ति । ८ तत्र अपापस्य पापरहितस्य जनस्य खनन' अपमानो नास्ति पर अद्भि रहितस्य कूपस्य विरस इति जलरहित इति खनन अस्ति । ९ शोभनगुणयुतस्य जनस्य न भंग' किंतु तद्गुणयुक्तमुक्ताहारस्य सच्छिद्रस्य भंगोऽस्ति १० अधिकतपश्चरणेन पूज्यस्य मुने. मलिन संकोचो नास्ति। किंतु अधिकसूर्यातपस्थितस्य कमलस्य कर्दमोत्पन्नत्वान्मीलन संकोचोऽस्ति । ११ विद्वद्भूषिताना जनाना क्रूरा इति नास्त्याकर्षण पर पुष्पालंकृताना शिरोरुहाणा वक्रत्वादाकर्षणमस्ति । १२ सुरक्तस्य परपुरुषस्य खंडन नास्ति प अरुणस्य ओष्ठस्य अधरचुंबनमस्ति ॥

एवं शासितराजस्य रममाणस्य कांतया
स्वयंप्रभो दिवश्च्युत्वा केशवाख्यः सुतोऽजनि ॥४५॥
वज्रजंघभवे यासौ श्रीमती तस्य वल्लभा ॥
तस्मिञ्जाते सुते राज्ञः प्रीतिरासीद्गरीयसी ॥ ४६ ॥

इहैव किल सुरलोकनिकाशे देशे शार्दूलचरश्चित्रांगदेवः[1] स्वर्गात्प्रच्युत्य विभीषणनृपालस्य प्रियदत्तायां वरदत्तनामसूनुरजायत ॥

मणिकुंडली[2] चानतमतिनंदिषेणयोः राजदंपत्योर्वरसेनसमाह्वयः पुत्रो बभूव ॥

मनोहरश्चंद्रमतिरतिषेणनाम्नोः राजजायापत्योश्चित्रांगदः पुत्रो बभूव ॥

मनोरथोऽपि[3] चित्रमालिनीप्रभंजनयोः क्षत्रियभार्यापत्योः प्रशांतमदनो नाम नंदनोऽजायत ॥

तदनु चक्रधरेणाष्टादशसहस्रनृपपरिवृतपार्श्वभागेन सममेतेषु विमलवाहाख्य जिनमाश्रित्य प्रव्रज्यामास्थितेषु, सुविधिभूपालस्तु पुत्रस्नेहेन गार्हस्थ्यं त्यक्तुमक्षमस्तत्क्षणमुत्कृष्टोपासकस्थाने दुश्चरं तपस्तप्त्वा, प्राणान्ते जैनीं दीक्षामासाद्य सम्यगाराधितमोक्षमार्गे समाधिना त्यक्ततनुरच्युतेंद्रो बभूव ॥

केशवश्च परित्यक्तकृत्स्नबाह्येतरोपधिः ॥
प्राप्तो जैनेश्वरीं दीक्षां प्रतींद्रोऽभवदच्युते ॥ ४७ ॥
पूर्वोक्ता वरदत्ताद्याः पुण्यात्पार्थिवनंदनाः ॥
तदानीं समजायंत तत्र सामानिकाः सुराः ॥ ४८ ॥
राकाकोकारिपुमतीतवदनो[4] राजीवसल्लोचनः ।

---

१ सूकरार्यचरः । २ कपिचरः । ३ नकुलार्यश्च । ४ कोकस्य चक्रवाकस्य रिपुः चद्रः ।

श्रीमानच्युतवासवः सुरभिलं मंदारमाल्यं वहन् ॥
रेजे भूषणरत्नकांतितटिनीखेलन्मरालस्फुर- ।
द्देह कांचनशैलश्रृंगतुलितावंसौ दधत्सुंदरः ॥ ४९ ॥

यस्य च समदया गजघटया तुलिता चित्तवृत्तिः । सदाभया तनुलतया सदृशी सामानिकपरिषत् । अतिशोभनया संपदा समाना देवीसंततिः । अतिमृदुलया वचोधारया समिता सुरसुंदरीजनगानकला । शोभितसुवर्णसरोरुहया करकांत्या तुल्या ससानीकपद्धतिः । कलितमनोजया तारुण्यलक्ष्म्या निकाशा धैर्यवृत्तिः । सुगंधिगंधवायुविशोभितरया कल्पकवनवीथिकया सगधा सैंधवपरंपरा ॥

किं च यद्देवीकुचमंडलेषु मकरीगणश्चक्रभासुरता सरसता चेति युक्तमेव यतोऽत्र सरश्चकासामास किं तु कुचभरो नीरसहितो नासीदित्यद्भुतमेव ॥

त्र्यरत्निप्रमितोत्सेधदिव्यदेहेन राजितः ॥

---

१ भुजशिरसी । २ मदसहितया समानदया च । ३ यस्य सामानिकपरिषत् सदा आभया सदा आभया कांत्या तनुलतया सदृशी । ४ प्रशस्तकांत्या संपदः अधिकशोभनयाः यस्याः सा एतादृशी देवी-परंपरा । ५ अतिमृदुलयः तालः यस्याः सा गानकला अतिकोमलया वचोधारया समिता । ६ प्रकाशितसुवर्णमयकमलसदृशया करकान्त्या प्रशस्तसुवर्णमयकंठहारयुक्ताश्च ससानीकपद्धतिः तुल्या । ७ धृतो मन्मथो यया सा तया तारुण्यलक्ष्म्या । कृतो मनसो जयो यया सा धैर्यवृत्तिः १२ सुगंधिवायुना विशोभितरया कल्पकवनवीथ्या । सुगंधिवायुविशोभितो रयो वेगो यस्याः सा अश्वपद्धतिः सगधा । ८ मकरिकापत्र मत्स्यगणश्च । ९ वरूथेन भासुरता, चक्रवाकपक्षिणा भासुरता च । १० श्रृंगारादिरसयुक्तता जलसहितताच । ११ कुचमंडले । १२ सरोवरं मुक्ताहारश्च । १३ जलसहितो नास्तीति विरोधः । पक्षे नीरसानां श्रृंगारादिरहितानां हितः न भवति ॥

मानसोऽस्य प्रवीचारो विंशंणोऽपि तथा भवेत् ॥५०॥
द्वाविंशतिसहस्रैश्च समानां सकृदाहरेत् ॥
तथैकादशभिर्मासैः सकृदुच्छ्वसितं भजेत ॥ ५१ ॥

संचारिणीभिरिव हेमलताभिराभि-
र्देवीभिरेप ललिताकृतिरच्युतेंद्रः ॥
चिक्रीड दिव्यसरसीपु कुमुद्वतीपु
मंदारसुंदरवनेपु च मंदरेपु ॥ ५२ ॥

ततश्च तस्य स्वर्गप्रच्युतिलिंगेपु देवीजनशोकाग्निविस्फुलिंगेष्विव प्रकटीभवत्सु, धीरधीरमना सोऽयं अच्युतेंद्र. पण्मासानर्हत्परमेष्टिसपर्यामत्याश्चर्यां विधाय त्रिदिवात्प्रच्युत्य, जम्बूद्वीपप्राग्विदेहविशोभिनपुष्कलावतीविषयमंडितपुंडरीकिणीनगर्यां श्रीकांतावज्रसेनयो राजदंपत्योर्वज्रनाभिनामा पुत्र. समजायत ॥

तयोरेव सुता जाता वरदत्तादयः क्रमात् ॥
विजयो वैजयतश्च जयतोऽप्यपराजितः ॥ ५३ ॥

अथ वज्रजंघभवे तस्य ये मतिपुरोहितसेनाधिपश्रेष्ठिनो मतिवरानंदाकंपनधनमित्रनामधेया अधोग्रैवेयकेष्वहमिंद्रा जातास्ते किल ततः प्रच्युत्य सुबाहुमहाबाहुपीठमहापीठाह्वयास्तयोरेव तनया.समजायत ।

नगर्यां केशवोऽत्रैव धनदेवाह्वयोऽभवत् ॥
कुबेरदत्तवणिजानंतमत्याश्च नंदन· ॥ ५४ ॥
निसर्गसौंदर्यनिधेरमुष्य तारुण्यमासीत्पुनरुक्तिपात्रम् ॥
विश्वाविहारालयवज्रनाभेर्हेम्नो यथा वर्णविशेषक्लृप्तिः ५५
लक्ष्म्या साकं विपुलमभवत्तस्य वक्षस्तदानीं ॥

१ मैथुन । २ भोजन वत्सराणा॥

सता शत्रुक्षितिपविभवैर्मध्यदेशः कृशोऽभूत् ॥
कीर्त्या सार्धं जघनवलयं विस्तृतत्वं प्रपेदे ॥
तेजोलक्ष्म्या सह गुणनिधेरुद्गता रोमराजि ॥ ५६ ॥

तदनु वज्रसेनमहाराजोऽपि तस्मिन्नेव तनये राज्यलक्ष्मीं नियोज्य लौकांतिकामरै. प्रबोधितो विहितनिष्क्रमणमति· कलितसुरवरापचिति सहस्रप्रमितैर्नराधिपतिभि मह परिनिष्क्रम्य तपोलक्ष्म्या समालिंगितदेहोऽपि मुक्तिलक्ष्मीं प्रमोदिनीं चक्रे ॥

जयागारे चक्रे विजितरविबिंबे रुचिभरैः ॥
समुद्भूते पुण्यात् क्षितिपतिरसौ कौतुकवशात् ॥
विधायैतत्पूजां विलसितषडंगेन महता ॥
बलेनाथ श्रीमान्स निखिलदिगंतानि जितवान् ॥५७॥
धनदेवोऽपि तस्यासीद्धरणीशस्य चक्रिण ॥
रत्नं तद्गृहपत्याख्यं निधौ रत्ने च योजितम् ॥५८॥

यस्य च महीरमणस्यारिचक्रे पाणिलालितं खडित च । सुमनोमाला कठे पार्श्वे च । यस्य सुरा पौरवर्गो विधेयाश्च । यस्य च वचनक्रम इव सत्यो, भुज इव सालसदृशो वनिता । यस्य च मनोजवन्ति तु-

१ अराः सन्ति यस्मिस्तत आरि आरि च तच्चक्र चारिचक्र । तत् पाणिलालित । शत्रुचक्रं शत्रुसमूह. तत्खडित । २ पुष्पमाला गले विद्वत्समूहश्च पार्श्वे । ३ सुष्ठु रा द्रव्य यस्यासौ सुरा. शोभन द्रव्ययुक्त इति भाव: ॥ सुरा देवाश्च । पौरवर्ग शोभनद्रव्ययुत देवाश्च विधेया भृत्या. इत्यर्थ· । ४ यस्य वचनक्रम इव वनिता सत्यः पतिव्रता· । ५ भुज इव सालसदृशश्च अलसेन सहिता दृशो दृष्टयो यासा ता । वचनक्रम सत्य· मिथ्याभाषणरहित. । भुजश्च सालस्तटस्तत्सदृशः । ६ तुरगसमूहा· मनोजवाति चित्तवद्वेगवतो भवन्ति । देवीमडलानि च मनोजो मदन. अस्ति येषु तानि मदनयुक्तानि इति भाव· ।

रगसमूहा देवीमडलानि च । वनराजीवंति वनिताद्दशः क्रीडास्थानानि च । स्त्रीणा भ्रमन्ति नाभयो न त्रुधाः । उत्सर्पन्ति रोमराजयो न शत्रवः । दरति कंठा न पौराः । गदति वियोगा न दुर्भाषा जना. । हरंति हासा न धनानि चौराः ॥

आलोक्य दिग्जये यं शात्रवसैन्ये निषादियूथस्य ॥
अंकुशमगलद्धस्तात्कुशमक्ष्णोः श तथैव मनसोऽपि॥५९॥
आलक्ष्य यस्य वीर्यं युद्धारंभे धुरि द्विषां हस्तात ॥
गलति स्म चंद्रहासो हासोऽपि च तत्सतीमुखांभोजात्॥६०॥
जयश्रिया यत्र वृते रणाग्रे विवाहशोभामरिभूमिपालः
लेभे तदानीं रिपुसैन्यवर्गाश्चित्रं चिरंनंदनसौख्यमापुः॥६१॥

असौजन्ये निपुणोऽपि सौजन्यनिपुणोपि मर्त्येन्द्रशायामप्यच्युतोमर्त्येन्द्रो वभूवेति चित्र ॥

---

१ वनिताद्दश. वनराजीवन्ति वन जलं, राजीव कमल जलकमलीमिव आचराति इति वनराजीवन्ति। वनितानेत्राणि जलस्थितकमलवद्विभान्तीति भाव. । क्राडास्थानानि च वेनानामुद्यानानां राजी पंक्तिः अस्ति येषु तानि वनराजीवन्ति । २ स्त्रीणा नाभयो भ्रमति जल निर्गमा इव आचरन्ति न त्रुधा भ्रमन्ति भ्रान्तियुक्ता भवन्ति । ३ रोमराः जयः उत्सर्पति उद्गच्छत्सर्प इव प्रतिभान्ति। शत्रवः न उत्सर्पन्ति नाभि द्रवन्ति । ४ दरन्ति शंखवदाचराति कंठाः न दरन्ति भय प्राप्नुर्वान्त पौरा । ५ वियोगा गदन्ति रोगायन्ते । जना दुर्भाषा न गदन्ति न ब्रुवन्ति । ६ हासा हराति मेना हरन्ति चौरा धनानि न हरन्ति । ७ कुश जल । ८ श सुख ९ चंद्रहासः खड्गः । १० जयश्रियाऽय नृपो वृतः शत्रु नृपश्च विवाहशोभा लभते स्मेति चित्र । तत्परिहार असिन्नृपतौ जयश्रिया वृते सति शत्रुभूपाल. विहतवाहनशोभा लेभे । ११ - रिपुसैन्यवर्गा. पुत्रसौख्यं प्रापुरिति चित्रं । परिहारः रिपुसैन्यवर्गा मृत्वा देवत्व प्राप्य नदन वनसौख्य भेजुरिति भाव । १२ असौ सौजन्यनिपुणोऽपि सौजन्यनिपुण इति विरोधः ।परिहारश्च असौ जन्यनिपुण. युद्धप्रवीणः । मनुजेद्रदशायां अच्युतेंद्र इति चित्र। अकारेण च्युत अमर्त्येन्द्र मर्त्येन्द्र इत्यर्थः ।

यस्य च सपक्षा विपक्षाश्च सकलभ-यशस्य-गमना । सुमहिता मुक्तापासुलभवनपालिमधिवसान्ति ॥

कुंदसुंदरयशोविशोभित पाकशासनसमानवैभव. ॥
सोऽयमुज्वलगुणो निधीश्वर.शासति स्म सुचिराय मेदिनीं॥६२॥

तदनु कदाचन विषयाभिलाषविरतस्वान्त मेदिनीकात· वज्रदंतसमाह्वये पुत्रे विन्यस्तसमस्तराज्यभार. षोडशसहस्रपरिमित पृथ्वीपतिभि , सहस्रेण नदनै , अष्टाभि सोदरैर्वनदवेन च परिवृत., स्वगुरोस्तीर्थकरस्यापेकंठे जैनीं दीक्षामासाद्य, तीर्थकरत्वागानि षोडशभावना. सुचिर भावयन् अतिदुश्चरमाश्चर्यावह तपश्चचार ॥

ततोऽसौ कालांते प्रथितसुतपाः पुण्यचरितो ।
महीकांत शांतोऽविशत शिखरं श्रीप्रभगिरेः ॥
परित्यक्ताहार प्रकटितसमाधिर्गुणानिधि
सुखात्त्यक्त्वा प्राणानगमदहमिंद्रत्वपदवीं ॥ ६३ ॥

सर्वार्थसिद्धावहमिंद्रदेवः स्वकान्तिदुग्धांबुधिमध्यमग्नः।
राकासुधासूतिरिवाकलंकः पुंजीकृतो वा सुषमैकसारः ॥६४॥

अथवा राकाकोकारि सकलकलावल्लभतया सन्मार्गनिविष्टतया चानेन समानोऽपि सोऽय दोषाकरोऽपि कलकमलिनोऽ पि सत्पतिरिति, सप्तविंशतितारापातिरपि शततारापाति·, हिमकरोऽपि परिशोभितमीन

१ यस्य सपक्षा· गजसहितश्लाघनीयगमनाः पूज्या त्यक्तधूलिगृहपंक्तिमधिवसंति ॥ विपक्षाश्च सकल भययुक्तगमनाः मुक्तापा त्यक्तजला सुलभवन-पालीं-सुलभवनसमूहा अधिवसन्ति ॥ २ पूर्णमासीचद्र । ३ दोषा रात्रिं करोति इति, ४ सता सज्जनाना पतिः । सता नक्षत्राणा पति· । ५-६ सप्तविंशतितारापतिरपि शततारापतिरिति विरोध· शततारामिधस्य नक्षत्रस्य पतिरिति परिहार· ७।८ हि-मकरोऽपि मकरराशिरपि परिशोभित मीनराशिरिति विरोधः स हिमकरश्चंद्रः परिशोभितमीनराशिमान् ।

# चतुर्थः स्तवकः

प्राज्यप्रभावप्रभवः प्रशस्तधर्मस्य पादानतदेवराजः ॥
विध्वस्तमिथ्यात्वतमा जिनेश आद्योऽथवान्ये ददतां शुभानि
॥ १ ॥

इह खलु जंबुद्वीपसंभावितभारतवर्षविशेषकायमानराजताशिखरिदक्षिणभागे तुलितस्वर्गैकखंडे मध्यमखंडे कालसंधौ मुखे मनोहरा गा, भुजे ज्यां हृदि क्षमा, भूदेव्या विरहमसहमान इव बिभ्राणः, कीर्तिसोमविलसिताना दिगंगनाना घुसृणरसपरिक्लृप्तव्यात्युक्षिकासंदेहदायकेन प्रतापेन विभ्राजमानः, कुलकृतामत्य निखिलभाविमहीपालानां नाभिर्नाभिनामधेयो राजा बभूव ॥

तस्यासीन्मरुदेवीति देवी देवीव सा शची ॥
चरंती हेमवल्लीव साकारैवैदवी कला ॥ २ ॥

सा खलु बिंबोष्ठी चंद्रलेखेव गगनतलस्य, वसंतलक्ष्मीरिव सहकारवनस्य, चांद्रिकेव चंद्रस्य, प्रभेव प्रभाकरस्य, मदलेखेव दिग्गजस्य, कल्पवल्लीव कल्पपादपस्य, कुसुमश्रीरिव मधुमासस्य, कमलिनीव सरो-

---

१ समीचीनधर्मस्य उत्कृष्टमाहात्म्यस्थान चरणानतदेवराजः निरस्तमिथ्यात्वतिमिर आद्यो जिनेशः नः कल्याणानि ददातु । इति आद्यजिनपक्षे श्लोकाभिप्रायः । अवशिष्टजिनाना पक्षेऽय भावः—सम्यक्स्वरूपस्य धर्मस्योत्तममाहात्म्यानां प्रभवः स्थानानि, पादयोरानतो देवराड् येषां ते, निराकृतमिथ्यात्वतमाः तमशब्दोऽकारान्तोप्यस्ति ; जिनाना ईशते इति जिनेशः अद्यादन्ये त्रयोविंशतिजिनवराः शुभानि ददतां ।

वरस्य, तारापंक्तिरिव प्रदोषसमयस्य, हंसमालेव मानससरोवरस्य, चंदनवनराजिरिव मलयाचलस्य, फणामणिपरंपरेव फणिपतेः, त्रिभुवनविस्मयजननी जननी वनिताविभ्रमाणां, खनी गुणरत्नानां, वनी कांतिलतानां, धुनी शृंगाररसस्य, महीपालभूषणं बभूव ॥

भानि भ्राजितकांतिसारलहरीं रात्रिंदिवं सेवितुं ॥
प्रोद्युक्तानि विहाय तानि खतलं तस्याः कुरंगीदृशः ॥
पादांभोजयुगे समाविरभवन्नून नखानि क्षणात् ॥
तस्मात्खं च नभःस्थलं समभवद्रूढ्येव तारापथम् ॥ ३ ॥
स्वर्णस्थितिं प्राप्तमपि प्रभूतां सरोजमस्याः पदवारिजस्य॥
वसुप्रपंचानपहृत्य राज्ञो भयाद्वनांते वसतिं विधत्ते ॥४॥
मनोजतूणीयुगलं मृगाक्ष्याः जंघायुगं नूनमिति प्रतीम ॥
यतस्तदग्रे पदकैतवेन तद्बाणभूतं जलजं चकास्ति॥५॥
तदूर्ध्वकांतिं स्वकरे चिकीर्षुर्मत्ताद्विपोऽसौ यतनं विधत्ते ॥
तत्कांतिचौर्याय सदा प्रवृत्तो रंभां विमथ्नाति कुतोऽन्यथासौ॥६॥
कटीमंडलमेतस्याः कांचीसालपरिष्कृतं ॥
मन्ये दुर्गमनंगस्य जगड्डामरकारिणः ॥ ७ ॥

---

१ नक्षत्राणि शोभमानकांतिसारवीचिं तां मरुदेवीं अहर्निशं सेवितुं खतलं–आकाशतलं परित्यज्य तस्याश्चरणकमलयुग्मे नखानि समजायत । अत एव आकाशं 'ख' शून्यरूपं समभवत् । तथा नभस्थलं अभवत् । 'न भानां नक्षत्राणां स्थलं नभस्थलं' तर्हि तस्य तारापथमिति कथं नाम प्रथितमिति चेद्रूढित इति ब्रूमः ॥ २ कांचनस्थितिं पक्षे शोभनजलस्थितिं । ३ द्रव्यसमूहं पक्षे किरणसमूहं । ४ राज्ञश्चंद्रस्य । ५ वनांते जलमध्ये अरण्यांते च । ६ शरावियुग्मं । ७ मन्मथबाणरूपं । ८ रंभां मोचातरुं कदलीमित्यर्थः । ९ जगद्विजयकारिणः ।

इति, मृगकृत्तिकावशेषोऽपि परिलसितसितांशुक इति, नक्षत्राधिपोऽपि राजेति, जडस्वभावोऽपि जडव्युत्पन्नोऽपि कलानिधिरिति, भश्रीकरोऽपि नभश्रीकर इति, स पुनर्वसुवर्गशोभितोऽपि स्वातिसमृद्धिविराजितोऽपि पूर्वाशावशेन शुभोदयभूभृत्सेवा दिने दिने करोति इति परस्पर विरुद्धार्थं प्रकटयतीति नोपमानभावमर्हति ॥

सुमनोधर्मतया तयास्य समानोऽपि पञ्चशर सुदृशामपि बाधा विदधाति, मार्गणाना पञ्चतामपि सहते इति न दृष्टाततामनुभवितुमीष्टे । वसतस्तु सकलसुमनोगरिष्ठोपि जातिभ्रष्ट इति स्मरणार्होऽपि न भवति इति कटकोचिततया न तुला भजति इति न चित्रमेतत् ॥

---

१-२ हरिणचर्मयुक्तोऽपि राजितशुभ्रवस्त्रवानिति विरुद्ध । पक्षे मृगशिराकृतिकानक्षत्रयुक्तः ; प्रकाशितशुभ्रकिरण । ३ न क्षत्राणा क्षत्रियाणा अधिपोपि राजेति विरुद्ध पक्षे तारकाणा अधिपोऽपि चद्र इति । ४-५ जडस्वभावोऽपि मूढतास्वभावोऽपि जडव्युत्पन्नोऽपि जडबुध्या जातोऽपि कलानिधीरीत चित्र, परिहारः डलयोरभेदात् जलस्वभाव जलव्युत्पन्न इति कलानिधि षोडशकलायुक्त । ६-७ भाना नक्षत्राणा श्रिय करोतीति भश्रीकर नभस श्रिय करोतीति नभश्रीकर इति परिहारः ८-९-१०-११ स पुनर्द्रव्यसमूहशोभितोऽपि स्वस्य धनस्य अतिसमृध्याविराजितोऽपि पूर्वानुगतधनाशावशेन भूभृत्सेवा राजसेवा करोति इति विरोध परिहार पुनर्वसुनक्षत्रशोभित स्वातिनक्षत्रविभवविशोभितः सन्पूर्वदिग्वशेन उदयाचलसेवा दिने दिने करोति इति परिहारः ॥ १२ देवत्वधर्मयुक्ततया । पुष्पधनुर्युक्ततया । १३ सम्यग्दृष्टिजनानामपि पक्षे स्त्रीणामपि। १४गतींद्रियकायादिचतुर्दशमार्गणाना पक्षे बाणानां। १५विनाशता पक्षे पचसख्यात्व। १६ सकलदेवगरिष्ठोऽपि जातिभ्रष्ट इति विरोध पक्षे सकलपुष्पगरिष्ठोऽपि जातिभ्रष्टः नवमाल्लिकापुष्पविरहित नवमाल्लिकोत्पत्तिर्ग्रैष्म भवति । अवशेषाणि पुष्पाणि प्राय वसतते समुत्पद्यन्ते ॥ १७ कर्कराशिना युक्तः न तुलाराशिं भजति । पक्षे कटकाभरणयुक्तः ।

तेष्यष्टौ भ्रातरस्तस्य धनदेवोऽप्यनल्पधीः
जातास्तत्सदृशा एव देवाः पुण्यानुभावतः ॥

स किलायमहमिंद्रस्त्रयस्त्रिंशत्पारावारपरिमितास्थितिर्हस्तमात्रोच्छ्रितदेह. स्वक्षेत्र एव नवरत्नप्रभामनोहरे विहरमाणः सकल्पमात्रकृतसन्निधानैः कुसुमगधाक्षतादिभिर्जिनेंद्रसपर्यां कुर्वाण क्वचिदनाहूतामिलितै. स्वसमानवैभवैरहामिंद्रैर्धर्मगोष्ठीषु सभापमाण., त्रिसहस्राधिकत्रिंशत्सहस्रवर्षातिक्रमे मानस दिव्यमाहारमगीकुर्वाण· पचदशदिनाधिकषोडशमासावसाने प्रोच्छ्वासं प्रकटीकुर्वाणः सुखमासामास ॥

※ इति श्रीमदर्हद्दासकृतौ पुरुदेवचम्पूप्रबंधे तृतीयस्तबकः ॥ ※



स्वयमंबर[1]मपि मध्यं तस्या सूक्ष्मांबरोपेतम् ॥
तदपि च नेत्राविषयं बभूव चित्रं सुमध्यायाः ॥ ८ ॥
परिवेष्ट्य मध्ययष्टिं नाभिविलांतं कुरंगलोलाक्ष्या ॥
मणिखचितसर्वदेहाश्चितं काचित्प्रदा[2]कुरधिशिश्ये ॥ ९ ॥
रोमश्रेणी कुसुमधनुषा यौवनारामवृद्ध्यै ॥
नाभीवापीनिकटघटिता किं घटीयंत्रदारु[3] ॥
तस्याधस्तात्त्रिवलिकपटात्कल्पितं तद्विरेजे ॥
सोपानानां त्रितयमतनोः पादविन्यासहेतोः ॥१०॥
हस्तोज्ज्वलो[4][5]ऽसौ नखशीतरश्मि–
स्तस्यास्तुलां[6] नांचति युक्तमेतत् ॥
तथापि चित्राधिककांतिशोभी[7]
स्वातिप्रकाशं[8] च चकार चित्रम् ॥ ११ ॥
तस्याःकुचौ मारमदेभकुंभौ ध्रुवं यदस्याः परिमौक्तिकश्री ।
रोमावलीवल्लिमिषेण रेजे शुंडाप्रकांडश्च चिरादधस्तात् ॥१२॥
चिरमुपगतामेतां त्यक्तुं नभोग[9]सरोगतां ।
कुवलयदृशस्त्वासीदब्ज[10]द्वयं नयनाननं ॥

१ स्वयमंबरमपि वस्त्रमपि तस्या मध्य सूक्ष्मांबरोपेत सूक्ष्मवस्त्रोपेतमिति विरोधः। परिहारस्त्वेव तस्याः मध्य आकाशवदतिशयेन सूक्ष्म तथा मृदुवस्त्रोपेत। तदपि च नेत्राविषय नेत्रं वस्त्र तस्य अविषय वस्त्ररहित बभूवेति विरोध.। तत्परिहारश्च नयनागोचर बभूवेति ॥ नेत्र विलोचने वृक्षे वस्त्रमूले गुणे पथि ॥ इति विश्वलोचनः । २ प्रदाकुः सर्प. । ३ रोमपंक्तिरूपेण कृत्रिमप्रियालवृक्षेण । ४ मदनस्य । ५ करेणोज्ज्वलः पक्षे हस्तनक्षत्रेणोज्ज्वलः । ६ तुला तुलाराशिं तुलामुपमा । ७ चित्रा नक्षत्र पक्षे चित्राऽनेकविधा चासौ अधिककांतिश्च तया शोभते । ८ स्वातिनक्षत्र पक्षे स्वस्य धनस्य अतिप्रकाश च कारेति चित्र ॥ ९ नभसि गच्छति इति नभोगस्तस्य भावः नभोगता पक्षे न भोगता।सरो गता पक्षे रोगसहितता। १०अब्जद्वय कमल चंद्रश्च।

अहमपि भवाम्यस्याः कंठस्तथा[1]ऽब्जसमाह्वय ॥
इति किल दरस्तस्याः कंठात्मतां समगच्छत ॥ १३ ॥
वचनाधरौ मृगाक्ष्या मधुरौ तत्राद्यसंगतो वर्णः ॥
शुकलौ[2]ल्यश्चरमगतः किंशुकलौ[3]ल्यारित्वयान्भेदः ॥१४॥
नासाकैतवदीर्घवंशकलितस्तंभे कुरंगीदृशः ॥
भ्रूवल्लीद्वयरज्जुवद्धशिखरे द्राङ्नाट्यजीवि स्मरः ॥
राजरतद्रुचिराननस्य पुरतस्तत्तांडवाडंबरं
चक्रे [4]चित्रतरं समस्तजनताचेतोहरं सादरम् ॥ १५ ॥

अस्याँ किल शुभदलसत्कातिविराजितं राजहससतोपनिदानमब्जाभिख्याचित सकलमनोहरामोदकारण सुमनःश्लाघ्य वदननलिन च समान। तथापि प्रथमं सकच विकलक सरसत्वमुपगत कर्णाभरणादिभिर्मुक्तामयं। अपर च विकच सपकं नीरसत्वमुपसेवते तथापि पूर्णचद्रोदये सरोगमिति न दृष्टान्तार्ह ॥

---

१ अब्जं शखः । २ तस्या वचन शुकवल्लाल्य ३ तथाधरः किंशुवत्सलाशपुष्पवदारक्त । ४ नृत्यजीवी मदनो घ्राणरूपे वशस्तभे बद्धे ये भ्रूरज्जू चाटित्वा घ्राणरूपे वशस्तभशिखरे मरुदवीमुखरूपराज्ञः पुरतः अनिर्वचनीय आश्चर्यंकर सकलजनमनोहर विस्तृत नृत्यमकरोत् ॥ नर्तकश्च पि राजादीना पुरतःस्तभाग्रमारुह्य नर्तनमाश्चर्यावह तनोतीति प्रतीतमेच सर्वेषाम् ॥५ अस्याः वदन शुभद लसत्कांतिविराजित, नलिनं शुभदल-सत्कातिविराजित। अस्या वदन राजहससतोषनिदानं नृपोत्तमनाभिराजानंदकारण, नलिन तु मरालमोदहेतु भवति । वदन अब्जाभिख्याचित—कमलवत्सौंदर्ययुक्त, नलिन तु अब्ज इत्याभिधानेन युतं। 'अभिख्या तु यश कीर्तिशोभाविख्यातिनामसु' इति विश्वलोचनः । वदन सकलमनोहरामोदकारण सकलमनःसतोषकारण । नलिन सकलचित्तहरसुगधिकारण । सुमनःश्लाघ्यं पुष्पेषु प्रशस्य नलिन । वदन विद्वत्सु प्रशस्य ।

क्वचतिमिरे लोलदृशो निविडे मारजनिभावितोत्कर्षे ।
कुसुमस्त्रजो विचित्राश्चक्रुर्हो हंत सौरभानुगतिं ॥१६॥
स तया कल्पवल्ल्येव लसदंशुकभूषया ॥
समाश्लिष्टतनुर्भूपः कल्पांघ्रिप इवाद्युतत् ॥ १७ ॥

अथ ताभ्यां दंपतीभ्यामलंकृते सुरलोकनिकाशे तस्मिन्देशे कल्पपादपात्यये भावितीर्थकृत्पुण्यसमाहूत. पुरुहूतः तत्क्षणमेव विस्मयकरविचित्रसन्निवेशविशेषां कवलीकृतसुरपुरगर्वां नगरीं काचिदयोध्या नाम कल्पयामास ॥

सुत्रामा सूत्रधारोऽभूच्छिल्पिनः कल्पजाः सुराः ॥
यत्र तत्पुरसौंदर्यं को वा वर्णयितुं क्षमः ॥ १८ ॥

यत्र पण्यवीथिकासु सकलभ—वनानीव सकल—भवनानि मदनागमोचितरसालसालपनसहितविटपालिपालिताभिर्मृदुलवल्लीभिरंचितानि विशोभंत । यत्र च सुरसालावलीव सुरसालावली सदाखंडलसाद्विचाररमणीया तथापीय च मरालिगतिहृद्या, सा पुनरमरालिगतिहृद्या,—सुमनःसमूहाः सामोदभ्रमरहिताः किंतु वनार्हसमुन्मेषा न वनार्हसमुन्मेषाश्च, रा-

---

१ मारजनिभावितोत्कर्षे मदनोत्पत्या लंभितोत्कर्षे पक्षेम या शोभाया युक्ता या रजनी तया संप्रापितोत्कर्षे । २ सूरस्य सूर्यस्य इमे सौराः सौराश्च ते भानवश्च किरणास्तेषामनुगतिं । पक्षे सौरभ सुगंधत्व तस्य अनुगतिं अनुसरण । ३ इद्रः । ४ इद्रः । ५ हस्तिपोतवनानि । ६ सुर-सालाः कल्पवृक्षास्तेषा आवलीव पंक्तिरिव । ७ शोभनाश्च ते रसाला आम्रवृक्षाः पुंड्रेक्षवश्च तेषा आवली । ८ सदा शक्रस्य प्रशस्तसंचाररमणीया पक्षे सदा अखडशोभमानपक्षिभ्रमणमनोहरा । ९ हंसीगतिहृद्या । १० देवपंक्तिगमनहृद्या । ११ पुष्पसमूहाः पक्षे विद्वत्समूहाः । १२ सहर्षभ्रान्तिरहिताः सुगधत्वाभ्द्रमरहिताः । १३ अरण्यार्हविकसनयुक्ताः । १४ मराला इव

जहसा इव राजहसा. सरसा तरगविभवमाश्रिता: किंतु भोगमनोहरोचितोल्लासा । नभोगमनोहरोचितोल्लाश्च । निर्जरजना इव निर्जरजनसुरतानंदवधुरा किंतु वनीविहारसक्ता अवनीविहारसक्ताश्च ॥ ललिताप्सर कुलानीव ललिताप्सर कुलानि स्वर्णस्थितिकलितानि

मजुगुजन्मनोज्ञहसकानि विलोलोर्मिकोज्ज्वलानि सर्वतोमुखकाति मधुराणि कमलाधिकशोभांचितानि किंतु विकचपद्मवदनानि सकचपद्मवं-

१ नृपोत्तमा: । २ सरोवरमध्यविभवमाश्रिता. राजहसा: । शृगारादिरससहितातरगविभवमाश्रिता राजश्रेष्ठा । ३ न विद्यते भोगादीति विरोध. पक्षे खचराणा । चित्तहरणोचितोल्लासा: राजश्रेष्ठा. ४ नभसा गच्छति इति नभोगा: पक्षिण तेषा मनोहरणयोग्य उल्लासो तेषा ते । ५ देवा इव । ६ तरुणजना: । ७ देवत्वानदसयुता पक्षे सभोगानदसंयुता: । ८ वनाना समूहो वनी । ९ मनोहरदेवागनासमूह इव जलसरोवरकुलानि १० काचनयुक्तानि पक्षे सुवर्ण: जल तेन युक्तानि सरांसि । ११ मजु मधुर गुजन्तो मनोज्ञा मनोहरा हसका मराला यत्र, पक्षे मधुर ध्वनन्ति चित्तहरनूपुराणि येषा तानि । १२ चचललहर्युज्ज्वलानि पक्षे चचलागुलीयकोज्ज्वलानि देवागनाकुलानि । 'ऊर्मिका त्वंगुलीये स्यात्तरगे मधुपध्वनौ' इति विश्वलोचन । १३ सर्वत: मुखकातिमधुराणि वदनप्रभामधुराणि । सर: पक्षे जलकातिमधुराणि 'कबधमुदक पाथ. पुष्कर सर्वतो मुख' इत्यमर: । १४ कमलै अधिकशोभाचितानि सरासि । पक्षे कमलाया अपि अधिकशोभायुक्तानि देवागनाकुलानि 'कमल जलजे नीरे' 'कमला श्रीवरस्त्रियाम्' इत्युभयत्र विश्वलोचन: । १५ सर.कुलानि विकचपद्मवदनानि प्रोत्फुल्लानि कमलान्येव वदनानि येषा एतादृशानि । १६ देवागना. कुलानि च सकचानि केशसहितानि पद्मवत् कमलवत् वदनानि मुखानि येषा तानि ।

दनानि । सुपर्वसुंदरास्तेजनास्तेजनाश्च तथापि कृशानुभावास्पदत्वम-कृशानुभावास्पदत्व मुक्तास्थानत्वममुक्तास्थानत्व चेति परस्परभेदः ॥ यत्र च राजेव राजा सकलकलावल्लभः कुवलयानदसंदायकश्च. किन्तु दीनबधुर्नदीनबधुरलीकाविप्रियो नालीकाविप्रिय, क्षत्राधिपतिर्नक्षत्राधि-पतिर्वसुधावैभवमनोहरो नवसुधावैभवमनोहरश्च ॥

साकेते किल तत्र चित्रनगरे देवाधिराज स्वयं ॥
नाभिक्ष्माधिपतेर्विधाय चतुरो राज्याभिषेकोत्सवं ॥
तद्देव्याश्च सुपट्टबंधनविधिं कृत्वैतयोर्विश्वदृक् ॥
सूनु संभवितेति कौतुकवशात्पूजां व्यधत्ताधिकम् ॥१९॥
षड्भिर्मासैर्जिनाधीशे स्वर्गादवतरिष्यति ॥
रत्नवृष्टिं दिवो देवाः पातयामासुरादरात् ॥ २० ॥

सा किल रत्नवृष्टिरत्र त्रिभुवनाधिपतिरवतरिष्यतीति कौतुकवशेन समागता स्वर्गसंपदथवा पुण्यकल्पद्रुमप्ररोहपरंपरा यद्वास्मत्तेजसा निरा-

---

१ अयोध्यानिवासिनो जनाश्च सुपर्वसुदराः सुपर्वाणो देवास्तद्वदिव सुदराः तथापि देवमनुजयोर्भेद निर्दिशति। देवेषु कृशानुभावास्पदत्व कृशानुभावस्पदत्व कृशोऽनुभवः प्रभावस्तस्यास्पदत्व स्थानत्व जनेषु च अकृशप्रभावस्थानत्व पक्षे कृशानुः अग्निस्तस्य अनुभावस्तेजस्तस्य आस्पदत्व । 'कृशानु पावकोऽनल' इत्यमरः । २ देवेषु मुक्तास्थानत्व वर्तते अर्थात् स्वस्थान मुक्त्वा अत्रायोध्या क्रीडार्थं आगच्छन्ति । जनास्तथा न अत्रैव क्रीडा कुर्वन्ति स्वर्गादपि अयोध्याया मनोहरत्वात् ॥ ३ चंद्र इव । ४ षोडशकलावल्लभः ५ चतुःषष्टिकलावल्लभः । कुवलय चद्रविकासि कमल पक्षे कोर्भूमेर्वलय मडल । ६ दीनानां मित्र ७ न दीनबधुः पक्षे नदीना इन पतिस्तस्य बधुः मित्र चद्रः । ८ अनृते विगतप्रियो राजा । नालीके पद्मखडे विप्रियो चद्र. पद्मानां सकोचकारकात्वात् ॥ ' नालीके पद्मखडेऽपि ' इति विश्वलोचनः ॥

करणनिदानमद्भुतं तेजोऽत्र समुदेष्यति इति मत्वा तत्सेवार्थं पूर्वमेव समागता नक्षत्रपरंपराहोस्विज्जगद्गुरुजन्मोत्सवो मयि भवतीत्यमदानंदवशेन लोकपुरुषे कलिततांडवे जगत्संक्षोभवशेन संजातानिधिगर्भस्रुतिः, किंवा परस्परमनुप्रविष्टा विद्युदिंद्रायुधसंततिरिति नभश्चरैरुत्प्रेक्ष्यमाणा वसुधारा जगद्भर्तुर्हिरण्यगर्भतां प्रकटयितुमिव नाभिनरपालसदनांगणे निपपात ॥

रत्नगर्भा धरा जाता हर्षगर्भाः सुरोत्तमाः ॥
क्षोभमायाज्जगद्गर्भो गर्भाधानोत्सवे विभोः ॥ २१ ॥

अथ कदाचिद्गंगातरंगाविमलदुकूलप्रच्छ[1]दशोभिते सौधे सुप्ता सा मरुदेवी निशायाः पाश्चिमे यामे निजकुचयुगलमिवावधीरितधराधरमैंद्रं गजं, शृंगारसहितं परिशोभितं माहारावसक्तं वृषभं, [2]स्तंबेरमकुंभस्थलनिर्भेदनपटुं गर्जत्पंचा[3]ननं, निजकांतकीर्तिमिव सुरनागै[4]र्लालनीयां पद्मां, भ्रमरहितमनोरमामवदातां मालायुगलीं, जीवंजीव[5] प्रत्यानंदसंदायिनीं सकलैं[6]चितवृत्तिमिंदुमंडलीं, स्वनायक[7]वक्षःस्थलमिव पद्माधिकोल्लासकरं पुरः परिस्फुरंतं भास्वन्तं, सरं[8]संयुक्तं पद्मावृतं शातं[9]कुंभकुंभयुगं, विमलसरःस्थितिमासक्तं मीनद्वयं, निजवल्लभमिव कमलाचितं[10]. कवीश्वरैः[11] संस्तुतं कुवलयप्रासाधनं[12] निर्मलं सरोवरं, सदुच्च-

---

१ चंद्रोपकेण । २ स्तंबरमः करी । ३ सिंहः । ४ सुरेषु नागः श्रेष्ठः इंद्र इत्यर्थः । पक्षे सुराणां नागः हस्ती ऐरावण इत्यर्थः । ५ जीवंजीवश्चकोरकः । ६ सकलैः अर्चिता श्लाघ्या वृत्तिर्यस्य । ७ स्वस्य मरुदेव्या नायकः पतिः नाभिनृपः । ८ पद्मा लक्ष्मीः पक्षे पद्मं कमलं । ९ पुष्पमालायुतं । १० सुवर्ण । ११ कमलया संपदा अर्चितैः युक्तैः । पक्षे कमलयुक्तैः । १२ महाकविभिः पक्षे जलपक्षिश्रेष्ठैः । १३ कमलैरलंकृतं पक्षे भूमंडलालंकृतं ।

लहरिधुरंधर सज्ज-नक्रमकरमुग्रतर-वारिमज्जितक्ष्माभृत्कुल पारावारं, सद्वृत्तरत्नमंडित सिंहासनं, सुरुचिरमणिमनोहर सुरभवनं, बहुशोभ-नागमहितं फणींद्रभवन, लोलांशुकविराजित रत्नसंचय, प्रतापिन निर्धूमपावक च विलोकयामास ॥

दृष्ट्वेमान्षोडश स्वप्नानद्राक्षीन्मदिरेक्षणा ॥
प्रविशंतं स्ववक्त्राब्ज पुंगवं कुंदनिर्मलम् ॥ २२ ॥

अरुणांबर दधाना संध्यारमणी विनिद्रपद्ममुखी ॥
देवि! तव पादसेवां कर्तुमिवायाति कमललोलाक्षी ॥२३॥

लक्ष्म्याःसमस्तवसुवृद्धिपुषो निवासो-
ऽप्यब्जं तथा वसुमतो वसुभिः परीतं ।
देवि ! त्वदीयमुखराजविरोधहेतो
र्नीलालके नवसुमत्त्वमहो दधाति ॥ २४ ॥

तवाननांभोजविरोधिनौ द्वा-

---

१ सदुच्चलहरिव्रजोद्धुर प्रशस्तोत्प्लवमानाश्वसमूहव्याप्त । पक्षे प्रशस्तोच्चलहरीसमूहैः तरगवृंदैर्व्याप्त । २ सज्जनाना पद्धतिकर पक्षे उच्चलन्नक्रमकरजलजतुयुक्त । ३ उग्रखड्गेन विनाशित शत्रुनृपतिकुलं पक्षे उग्रतरजलैर्मज्जितपर्वतसमूह ॥ ४ पीवरोच्चलहरिव्रजोद्धुरं सज्जनक्रमकर समतत. अब्धिमुग्रतरवारिमज्जितक्ष्माभृत पतिमिवावनीभुजां इति धर्मशर्माभ्युदये । ५ सच्चवतद्वृत्त चारित्र तदेव रत्न तेन मंडितम् प्रशस्तवर्तुलमणिमंडितं । ६ अत्यधिकमगलशास्त्रमोहितं नाभिं । पक्षे अत्य धिकशोभायुक्तैर्नागदेवै. पूज्यं ॥ ७ वस्त्रेण पक्षे किरणेन । ८ आरक्त वस्त्र पक्षे अरुणेन सूर्यसारथिना सहितं अंबर आकाश ॥ ९ वसुमतः धनिकस्य पक्षे चद्रस्य । १० न वसुमत्व पक्षे नवपुष्पत्वं ।

वज्जरतथाऽब्ज च पुमांस्तु तत्र ॥
त्वया जितोऽस्ताचलदुर्गमाप
त्यक्तं पुनः क्लीबमुपैति मोदं ॥ २५ ॥

इति प्राबोधिकहृद्यतमपद्यपरिपाटीभिर्मंगलवाद्यरवघाटीभिश्च प्रबुद्धा सा देवी कृतप्रत्यूपकृत्या कलितमंगलनेपथ्या सभामडपविभासितसिंहासनाग्रमधिवसतं नाभिमेदिनीकांत निजनयनचकोरकुमुदिनीकान्तमासाद्य यथादृष्ट स्वप्नजात निवेदयामास ॥

पृथ्वीशोऽप्यवधिज्ञानप्रबुद्ध स्वप्नसत्फलं ॥
व्याजहार रदोद्योतव्याजहारमयं दधत् ॥ २६ ॥

अयि देवि मत्तेभगमने ! मत्तेभदर्शनेन महान्पुत्रस्ते भविता, वृषासक्तचित्ते ! वृषनिरीक्षणेन सकललोकाधिपतिः, सिंहमध्ये ! सिंह विलोकनेन अनंतवीर्यो, मालारुचिरकचनिचये ! मालावलोकनेन धर्म तीर्थकर्ता, लक्ष्मीतुलितसौंदर्यसंपन्ने ! लक्ष्मीवीक्षणेन लोकोत्तरविभवः पूर्णचन्द्रानने ! पूर्णचन्द्रदर्शनेन सकलजनानंदसदायकः, प्रभाकरनिभमणिगणमंडिते ! प्रभाकरनिरीक्षणेन निःसीमतेजःप्रसरः, कुम्भस्तनि ! कुम्भयुगलेन निधिभाक्, मीनायतलोचने ! मीनद्वयेन अनंतसुखः, सरोवरसदृशनाभिमंडले ! सरोवरेण सल्लक्षणोपेत, पारावारगभीरे ! पारावारेण समस्तदर्शी, पीठायितनितंबे ! सिंहपीठदर्शनेन साम्राज्यमहितः, सुरविमानसमानमंदिरे ! सुरविमानेन स्वर्गादवतरिष्यति, फणिनिभवेणि ! फणिपतिभवनेन अवधिज्ञानलोचनः, सद्रत्नशोभिते, रत्नसंचयेन गुणाकरः शुचिस्मिते! शुचिदर्शनेन कर्मेंधनदहनः, वृषभाकारमादाय तवास्यप्रवेशेन वृषभो देवस्त्वद्गर्भे सन्निधास्यतीति ।

तावत्सुराधिपतिशासनतः समेत्य

---

१ अब्जशब्दः अब्जं कमलं । २ धर्मासक्ताचित्ते ।

अमार्नवचरित्रस्ते पतिरित्यपि युज्यते ॥ ३५ ॥

इतरा पुनराह—

तन्वि ! त्वद्वचनामृते विलसिते द्राक्षावली द्रागियं ।
आदौ रूपयुता तथा किल सिता मध्येऽधिका मानिनि !।
लोलाक्ष्यग्रजनांचिता नवसुधा लोलंबकेश्यादितो ।
राजच्छोभनवास्पदं मधुरसः प्रायो द्वयौ हास्यतां ॥३६॥

एतच्छ्रुत्वा साधुसचमत्कारभाषणधुरीणा साधु द्राक्षावली रुद्राक्षावली सिता सिकता नवसुधा नवसुधाना मधुरसोऽवमधुरसो बभूवेति सम्यगभिहितमित्यभिनद्य काचिदेवमूचे ॥

विद्याधरि ! तव कैंतुककञ्चुकनयन धीरतरधीः नयनयनोऽधनतानवः सरस तव पतिश्च कल्याणगुणोज्ज्वलतया परस्परं समानाः कदाचिदपि वर्णविपर्यासं न सहते इति ॥

इत्यादिभिः स्फुटचमत्कृतिभिर्वचोभि
र्देवीजनेन सहितं परिचर्यमाणा ॥
स निर्भरप्रथितगर्भभरालसांगी

---

१ अग अमावस्या पक्षे लोकोत्तरचरित्रं । २ रूपयुता मनोहरयुता द्राक्षावली । आदौ रुवर्णनयुक्ता चेत् रुद्राक्षावली इति साररहितेत्यर्थः । अधिका श्रेष्ठा सिता शर्करामध्येऽधिका मध्यस्थितिककारो भवति चेत् सिकतावत्भवति । अग्रजनांचिता श्रेष्ठजनाचिता नवसुधा नूतनामृता अपि पुनरग्रजना चिता—पुरत नकारवती नवसुधा न भवति । किंतु नवसुधाना—( पोहे इति महाराष्ट्रभाषाया ) षात् अभवत् । राजच्छोभ—नव—आस्पद मधुरसः अपि राजच्छोभनं वकारास्पद भवति॰ चेत्न मधुरसः वमनास्पदो भवतीत्यर्थ ३ एते कतुकादयः शद्वाः क्रमेण पठिताः वर्णविपर्यस्ता न सन्ति ।-

पत्या समं प्रमदवारिनिधौ ममज्ज ॥ ३७ ॥
चैत्रे मासवरे धरेश्वरसती पक्षे वलक्षेतरे ॥
सल्लग्ने नवमीदिने दिनमणौ प्राचीदिश प्रांचाति ॥
विश्वे ब्रह्मसमाव्हये साति महायोगे विशालेक्षणा ॥
प्राचीवार्कमसूत तत्र तनयं स्फारप्रभामदुरं ॥३८॥
नाभिक्ष्मापतिपूर्वभूधरतटात्प्राप्तोदयं श्रीजिनं ॥
बालार्कं विलसत्रिबोधकिरणं प्रोद्यत्तमोनाशनं ॥
लेखस्त्रीनलिनीलताकुतुकतः संवीक्ष्य मोदोल्लसद् ॥
बाष्पव्याजमरंदपूर्णविकसन्नेत्रांबुजा रेजिरे ॥ ३९ ॥

तदा किल त्रिदशाधिकस्नेहोज्ज्वले सुरुचिराज्यविशोभिते विभावयुदितभयहरणचणे उत्तमश्रीविराजितेऽपि तमसमूहविध्वसनधुरीणे जिनाभिधाने त्रिभुवन दीपे परिस्फुरति, लज्जयेव तदीयकांतिकल्लोलिनीलीना सुरांगनाकरारोपितदीपावलिर्दिनकरकरनिकरनिरंतरे दिनांतगे खद्योतपरंपरेवानवलोकनीयप्रकाशा केवलमंगलफला विललास ॥

नदीपबंधुगांभीर्यगुणेन त्रिजगद्गुरुः ॥
दीपानयं निराचक्रे तेजसेति न विस्मयः ॥ ४० ॥

तदानीं खलु जिनस्य प्रसिद्धा कोलारिरित्याभिख्या विबुध्य भयेनेव

१ कृष्णपक्षे । २ देवस्त्री । ३ देवेंद्रादिकानामधिकस्नेहोज्ज्वलो भगवान् पक्षे त्रिदशाभि वर्तिभिरधिकस्नेहोज्ज्वलो दीपः । ४ मनोहरराज्यशोभितो जिनः पक्षे सद्घृतविशोभितो दीपः । ५ विभौ प्रभौ अर्युदित शत्रूनन्न च यद्भयं तद्धरणे निपुणं पक्षे रात्र्युत्पन्नभीतिनाशने पटुर्दीपः । ६ अधिकांधकारेण शोभितो दीपः उत्तमा चासौ श्रीश्च तया विराजितो जिनः । ७ अंधकारध्वसनो दीपः अज्ञानांधकारध्वसनो जिनः । ८ समुद्रबंधुः न विद्यते दीपानां बंधुरिति ध्वनिः । ९ यमारिः पट्कालारिरिति ध्वनि

दिक्कन्यकाश्च कुतुकेन सिषेविरे तां ॥
श्रीर्ह्री धृतिः सपदि कीर्तिसुबुद्धिलक्ष्म्यो
देव्यो जिनस्य जननीमनवद्यरूपां ॥ २७ ॥
तास्तस्याः परिचर्यायां गर्भशोधनमादितः ॥
प्रचक्रुः शुचिभिर्द्रव्यैः स्वर्गलोकादुपाहृतैः ॥२८॥

तत्र काचिन्मुखविजितमेवार्थमुमागतविधुर्बिंबशंकाकरेण धवलातपत्रेण, अन्या च तद्वदनकमलमाभिपतन्मरालशकावहेन चामरेण, अपरा च निजतनुलताविलसितभुजशाखासमक्तशुकनिकरसंदेहदायकेन तांबूलीदलवृंदेन, इतरा च तदंगरक्षणतत्परा देहकान्तिसरोवरदीर्घमीनायमानेन करकलितकरवालेन यथोचितमरुदेव्या सेवा चक्रिरे॥

सा भारतीव व्यंग्यार्थं सिंधुवेलेव सन्मणिं॥
बभार सुदती गर्भं गुहेव हरिपोतकं ॥ २९ ॥
नोदरे विकृतिः कापि न स्तनौ नीलचूचुकौ
न पांडुवदनं तस्या गर्भोप्यवृधदद्भुतम् ॥ ३० ॥

कदाचिन्मरुदेवी देवीजनैः सह विकचवारिजविगलन्मधुरसमासल्पय परिवाहा तरंगिणीमासाद्य, बाले ! अतनुविहारकातासि । मुग्धे किमद्यापि चापक्रीडापरायणासि । भामिनि ! किमिति शरविहारमाकलयासि । सुदति ! किंवा बहुतर- वारिक्रीडा विदधासि मुग्धे । सर्वतोमुखभग करोषि ! अबले ! जडसंगम परिहर । सुकेशि ! कीलालार्द्रं वसन संत्यज ॥

---

१ धनुष क्रीडा पक्षे च आपक्रीडा अप्संबंधिनी क्रीडा=जलक्रीडेत्यर्थः । २ बाणविहारो जलविहारश्च 'शरस्तेजनके काडे शर नीरे नपुंसकमिति विश्वलोचन ॥३ बहुखड्गक्रीडा पक्षे बहुतरजलक्रीडा॥४ सर्वतो-मुख, सर्वतो-मुख जल च। ५ डलयोरभेदात् जलसगम इति भवति। कीलालं जलं रुधिर च । ६ कीलालं रुधिरेऽपि स्यात्पानीयेऽपि नपुसकम्॥

वृद्धे कुतो विषं पिबासि अपापे। त्यज कबधानुरागं सुमुखि स्वर्ण-स्थितिमाप्तासी। सुमध्ये! प्रचुरोर्मिकाव्रज्ज मज्जसि। इत्यादिविविध-व्याहारपेशला व्यात्युक्षिका निर्वर्त्य, भवनप्रासादमारुह्य, यावत्सचम-त्कारसल्लापमम्बिकाक्षति तावत्काचिदिद पद्यमाह

नदवनजैमुदारं नाभिराजस्य कांतेः—
तव मुखसुखजन्मप्राप्तिसक्त्यातपस्थं ॥
अपि यदि तदधस्तान्नीतशीर्षं तपस्येत्
जनवदनमथापि प्रोद्भवेदेणनेत्रे! ॥ ३१ ॥

अहो साधु साधु भाषितमिति तामभिनद्यान्या तावदाह—

सुरादिजीवैरमृत निष्ठैर्लौल्या सरःस्थिति ॥
कुचाद्रितटयोरतन्वि! तव भातीति नाद्भुतम् ॥३२॥

अपरा तावदाह—

चंद्रात्मना सुधाब्धौ तव कान्त्यब्धौ मुखात्मना जातः॥
द्विजराज इत्यभिख्यामन्वर्थां वहति धनकुचे! राजा॥३३॥

अन्या पुनराह—

अधरारुणाबिंबेद्धस्मितेंदुरुचिसुंदर ॥
महादर्शविलासं ते मुखं धत्ते इति स्फुटं ॥ ३४ ॥

न केवलमेतदेव युक्त अन्यदप्येव दरीदृश्यव इत्याभिधाय काचिदाहः—

कीर्तींदुमंडलोपेतः प्रतापरविशोभितः ॥

---

१ विष गरल जलं च। 'विष तु गरले जले' इति विश्वलो! २ अगुलीयसमूह लहरोव्रज च। ३ जलक्रीडा ४ नदजलोत्पन्न कमलं ॥ ५ ग्रीष्मर्तौ स्थित तपश्चरणे स्थित च ॥ ६ सरोवरस्थिति। पीयूपासक्तैर्देवै र्लौल्या भातीति अद्भुत। मुक्ताहारस्थितिर्न अद्भुत ॥ ७ अमावास्या विलास पक्षे महादर्पणस्थितिं ॥

सेवनार्थं समसमयसमवतीर्णे. सर्वर्तुविलासैर्विकसदशोककविकचमल्लिका-कुटकुड्मलाडंबरकटंवरसनंदटरविदविकासितसिंदुवारप्रबुद्धलोध्रविशोभमाना वनमेदिनीकामिनी सजातोऽय भुवनाधिपतिर्विभुतया वनाधिपति-रिति मत्वा किल निजानुरागं प्रकटयतीव, मंदहासमान्वतीव, पुलाक-मुकुलानि बिभ्राणेव, आनंदाश्रुबिंदून्मुचतीव हर्षवशेन नयने विस्तार-यतीव, मलयजरजोराजिं किरतीव विराज ॥

शंबरारि[1]मदभेदनधीरो जात एष इति तोषविशेषात् ॥
शंबराणि[2] सह सज्जनचित्तैः सप्रसादमुपजग्मुरुदारम् ॥ ४१ ॥
प्रौढशोभनरवरांशुवैभवो[3] जात एष जिनचंडदीधितिः॥
इत्यवेत्य किल लज्जया तदा मंदितोष्णकिरणोऽभवद्रविः ॥४२॥
स सदागतिस्वभाव[4] पावनरीतिं[5] वहन्महच्छ्लाघ्यः ॥
जातोऽसाविति दुर्भरहर्षभराद्वायुराववौ मंदम् ॥ ४३ ॥
पुण्याश्रियं समधिकां प्राप्तुं सुनाश्रियं[6] महद्रुक्षाः[7] ॥
विजहुः को वा कुतुकादूनं न जहाति समधिकं प्राप्तुं ॥४४॥
राकाकोकारिकांतिप्रसरमुपगता प्रोल्लसत्पुंडरीक- ।
भ्राजच्छोभां दधाना जिनपवरयशःश्रीशरन्मेघजालं ॥
आरादुज्जृंभितापं[8] शमयति सहसेत्यंवरश्रीस्तदानी ।

---

१ मदनः ' शबरारिर्मनसिज कुसुमेषुरनन्यभू. ' इत्यमरः । २ शवराणि जलानि । ३ शोभन—खरांशुर्वैभवः सूर्यः । ४ सदा—अगति स्वभावः मोक्षस्वभावः जिनः । पक्षे सदागतिर्वायुः ' सदागतिर्गंधवाहे निर्वाणेऽपि सदीश्वरे इति विश्वलोचनः । ५ पावनरीतिं परिशुद्धत्व, अग्निमित्त्वं । ६ सूनश्रिय पुष्पश्रियं, पक्षे शोभन ऊनश्रिय इति ध्वनिः । ७ कल्पवृक्षाः । ८ ताप पक्षे उज्जृंभित—आप ।

मेघाटोपैर्विविक्तं विमलतरलसद्रूपमेषा बभार ॥४५॥

सा किल साकेतपुरी सुरतरुकुसुममेदुरतया विधृताविमलदुकूलेव, नभोंगणनिपातितचिरत्नरत्नरुचिरतया मणिभूषणमंडितेव, मलयजरस-संसिक्तांगी तत्र तत्र कल्पितविचित्रमुक्तामयरंगवल्लीविशोभिततया व्यामुक्तमुक्तामालिकेव, प्रतिनिलय लयविलसितगानविलासमनोरम-तया स्वयं गायतीव, समुल्लसत्पल्लवतल्लजमदानितवंदनमालासुंदरतया निजानुरागधारा प्रकटयतीव, व्यालोलसमुल्लसदुदस्तकेतुहस्ततया जिनजन्मोत्सवकुतूहलेन नृत्यतीव चिरतर चकासामास ॥

जिनस्त्रिलोकीजनवंद्यपादो जगद्गुरुः सोऽयमजायतात्र ॥
इतीव सत्केतुपटावृतां तां पुरीं न पस्पर्श रविः स्वपादैः॥४६॥

भवनामरभवनेषु प्रादुरभूच्छंखसंकुलारावः ॥
भो भो भो इति मरुतां जिनजन्ममहं वदन्निवानंदात् ॥४७॥

व्यंतरभेरीरावो लोकं व्यालोलयस्तदाऽजृंभत् ॥
जिनजन्मोत्सवहर्षान्मुक्तिश्रीविकसदट्टहास इव ॥४८॥

कंठीरवकंठरवो ज्योतिष्काणां गृहांगणे जातः ॥
आशासु कुंजरान्द्राङ्विनिर्मदांस्तानबिंदुकांश्चक्रे ॥४९॥
कल्पामरवरघंटाघोषोऽभून्मोक्षसाच्छ्रियो हर्षात् ॥
नृत्यत्याश्चरणरणन्मणिनूपुरशब्दसंशयनिदानं ॥५०॥

तदानीं उदारजिनरजनीकरशुभोदयलीलावेलोत्कूलितप्रमदपारा-वारचंचद्वीचिसंचयेनेव, विश्वातिशायिमाहिम्नि जगद्गुरौ जाते को वा-न्यस्य राज्यमहिमेति प्रभावशक्त्या घातेनेव, तत्कालजृंभिताविविधदुं-दुभिप्रभृतिवाद्यरवपूरितलहरीभरेणेव, आद्योदितस्य जिनराजस्य सकल-

१स्वकिरणैः। पादोऽस्त्री चरणे मूले तुरीयांशेऽपि दीधितौ इति विश्वलोचनः ॥

सिंहासनपराभवप्रवीणं सिंहासनमुद्वेष्यतीति भयेनेव निर्लिपपतीनां अकंपनानि सिंहासनानि चकंपिरे ॥

सुराधिपतिरादराच्चलनकारण निश्चितुं
दृशां दशशतैरापि प्रगुणमक्षमस्तत्क्षण ॥
उदीतविमलावधिप्रथितलोचनेन स्वयं
जिनाधिपविभूदयं हृदि विवेद तत्कारणं ॥ ५१ ॥

ततः पुरंदरः पीठात्प्रजवमुत्थाय, तद्दिशि सप्तपदानि गत्वा, नत्वा च, तमभिषेक्तुमनाः मनानितरमोदेन घनगर्जनतर्जनपटीयसीं प्रस्थानभेरीं प्रदापयामास ॥

चिराच्छयालु सद्धर्मं क्षणादुन्निद्रयन्निव ॥
त्रिलोकीं पूरयामास तारो दुंदुभिनिस्वनः ॥ ५२ ॥
ततः शक्राज्ञया देवपृतना निर्ययुर्दिवः
तारतम्येन सद्ध्वाना महाब्धेरिव वीचयः ॥५३॥
चतुर्णिकायत्रिदशास्तदानीं जिनेंद्रजन्मोत्सवकौतुकेन ॥
विनिर्ययुर्भूषणभूषितांगा दिशामधीशाश्च दश प्रचेलुः५४

तदनु सुपर्वराजोऽपि सुरहिततया, कुवलयानंदसंदायकतया सत्पथप्रवृत्ततया, सकलकलोज्ज्वलतया च पर्वराज इति कविभिरुत्प्रेक्ष्यमाणः सौधर्मकल्पशतक्रतुः, अगाभिरभ्यांचितमपि नागाभिरभ्यांचितं, नागमपि मदाल्हादिनमपि न मदोल्हादिनमैरावणमारुह्य, शच्या सह कृतप्रस्थानः, सामानिकत्रायस्त्रिंशपारिषदात्मरक्षलोकपालाभियोग्यकिल्बिषसंदोहपरिवृत., सुरभिलसुरतरुकुसुमपूरितपात्रपवित्रकराकिंकरनि-

---

१न मदाल्हादिनमिति विरोधः। नमता आल्हादिनमिति तत्परिहृतिः॥

करानुगम्यमानतया तदीयविरहं सोढुमशक्नुवद्भि क्रीडावनैरिवानुगम्यमानः, परस्परघट्टनरणन्मणिभूषणवाचालितकुचकुंभैः कलितकांस्यतालध्वनिभिरिव दृश्यमानैः गगनपयोधिपयोजशंकावहवदनविराजितैर्नृत्यद्भिः सुरांगनाजनैः परिनिष्क्रियमाणपुरोभाग , नभस्थजलधितरंगमकरशंकाकरैस्तुरगस्तंबेरमैर्निबिडितसावधिप्रदेशः क्रमेणांबरतलादवततार ॥

संमर्द्दाद्गलिता नटाद्विविषदां वक्ष स्थलप्रोल्लस-
न्माला मौक्तिकराजय क्षितितले पेतु सशोभांचिताः ॥
व्योमाभोगचलत्करेणुचरणप्रक्षेपचूर्णीभव-
न्नक्षत्रप्रचया इव प्रतिदिनं निःसीमकान्त्युल्बणाः ॥
पुरंदरपुरांतरान्नभसि संपतंती तदा
जिनेश्वरगृहावधित्रिदशपद्धतिर्मेदुरा ॥
समुज्जिगमिषोर्दिवं तदुरुकीर्तिलक्ष्म्याः पद—
क्रमाय परिकल्पिता मणिमयीव निःश्रेणिका ॥ ५५ ॥
स्फाटिकरुचिरसालं केतुमालाविलास—
स्थगितगगनभागं तत्पुरं संपरीत्य ॥
सुरवरपृतनास्तास्तस्थुरापूर्णबिंबं
शशिन इव परीतास्तारका व्योमसीम्नि ॥५६॥

ततश्चतुर्णिकायत्रिदशाध्यक्षसमेतस्सहस्राक्षः साकेतपुरलक्ष्मीवदनायमान, गगनतरुमंजरीभिरिव तर्जयनीभिः सुरपुरश्रियं पताकाभिरुपशोभमानं, चंद्रबिंबमिव सकलकलं, वृंदारकवृंदमिव सदामंगलमादधानं मंजुलास्यविराजितं च, विजिगीषुराजबलमिव पुरतोरणश्रीवि-

१ सदा मंगलपुरं । सदाम मालासहितं गलं कंठं । २ मंजु लास्यं नर्तनं तेन विराजितं पुरं । मंजुलं आस्यं तेन विराजितं देवसमूहं । ३ पुरतोरणशोभितं पुरं । पक्षे पुरतः रणश्रीः युद्धरंगश्रीशोभाचितं विजिगीषुराजबलमिव ।

राजमान सर्वतोमरशोभित च, वनोज्ज्वलमपि नवैनोज्ज्वलं, शिवाचितमपि विभवाचितं, सशालमपि विशाल नाभिराजसदनमासाद्य, शचीदेवीमतः प्रेषयामास ॥

अरिष्टगेहं तदनु प्रविष्टा सुरेन्द्रपत्नी सहसा ददर्श ॥
पुत्रेण जुष्टां जिनमातरं तां संध्यां नवार्केण युतामिव द्यौ॥५७॥

तदनु भक्तिरसपरीवाहेन प्लाविता पुरदरवनिता समुन्नतवंशपोतमवलंबितुकामा समीपमासाद्य रूपसंपदा मार कुमारमभिजातमपिनाभिजातं, रोचितवृत्तिमपि नरोचितवृत्तिं,सलक्षणमपि विलक्षणं, विलसतमप्यविलसत तनय त मायानिद्रामोहिताया मरुदेव्या अंके प्राचीव पूर्वपयोधिवीचे· प्रतिबिंब समर्प्य भानुमन्त क्षणात्स्वीचकार ॥

स्पर्शं स्पर्शं कौतुकात्कोमलांगं
दर्शं दर्शं तस्य दृग्भ्यां मुखाब्जं ॥
उद्यद्वंशं पोतमेषाश्रितापि
पौलोमी द्राक्संमदाब्धौ ममज्ज ॥ ५८ ॥

तदनु द्यौरिव बालभानुमुद्यन्तमर्हंतमादाय व्रजती मंगलधारिणी-

---

१ सर्वतः अमरशोभित पुर । पक्षे सर्वतोमरायुधैः शोभित राजवल। २ नवनेन स्तुत्या उज्ज्वल । ३ विगत—ईश्वराचितामिति विरोधः। पक्षे विभवेन ऐश्वर्येण अचित युक्त । ४ शालाभिः वेश्माभिः सहितमपि विशाल इति' विरोधस्तत्परिहारः विशाल विस्तारसयुक्तामिति । ५ नाव पक्षे उन्नत गोत्रोत्पन्न जिनबालक जिन । ६ न अभिजातं सत्कुल प्रसूतं न इति विरोधः । पक्षे नाभिराजेन जात । ७ रोचितवृत्तिर्न इति विरोधस्य परिहारः नराणा मनुष्याणा उचित वृत्तिः । ८ विगतलक्षणमिति विरोधः पक्षे विशेषलक्षणयुक्तं ॥ ९ विलसतमपि शोभमानामिति अविलसतमशोभमानामिति विरोधः। तत्परिहारः अविलसत भाविष्यदर्हत्वदेन शोभमान ॥

भिर्दिक्कुमारीभिस्तरंगितपुरोभागा सेयमिंद्राणी पाकशासनस्य करे पूर्वगिरेः सानौ द्युमणिं प्राचीव समर्पयामास ॥

गीर्वाणेंद्रस्त्रिजगतां गुरुमादाय सादरं ॥
संददर्श स तद्रूपं संप्रीतिस्फुरितेक्षणः ॥ ५९ ॥

त्वं लोकाधिपतिस्त्वमेव हि गतिर्भक्तिस्पृशां मादृशां
राजत्केवलबोधबाल्यरमणेः पूर्वाचलं त्वां विदुः
श्रीमन्नाधिपदे तनोति विनते द्राक् संपदं त्वद्रुचिः
सिध्यत्यत्र जने सुदृष्टिमहिते भव्ये समाधिस्ततः ॥६०॥

स्तुत्वेति जंभद्विषता जिनोऽयं न्यधायि मूर्ध्नि त्रिदशद्विपस्य॥
जयेश नंदेति वदद्भिरुच्चैः करांगुलिस्तत्र समस्तलेखैः ॥६१॥

तितीर्षुर्भववाराशिं जिनपोतं समाश्रितः ॥
करं मेरुप्रयाणाय चालयामास वासवः ॥६२॥

तदनु कौतुकवशेन नभोऽङ्गणमुत्पतितैर्भूषणगणप्रभाभिः सुरचापानि तन्वद्भिर्जयघोषणमुखरमुखैर्बर्हिर्मुखैः कवचितपुरोभागः, गंधर्वसमारब्धसंगीतानुसारिभिः कलितकुतुकधोरणीभिरुत्क्षिप्तभ्रूपताकाभिश्चलत्कुचकुंभाभिरप्सरोभिर्विरचितनाट्यविलासः, सघट्टक्षुण्णजलधरैर्विमानवरैर्निरंतरगगनातश्चलदैरावणद्वात्रिंशदाननाविलसदष्टदंतसमुदंचितसरोवरसमुज्ज्वलद्वात्रिंशद्दलाविलसितकमलदलेषु नटतीनां सुरलासिकानां लास्यान्यवलोकनेनांगीकुर्वाणः सुरनिकरकरांबुरुहमुकुलीकरणचतुरं मंदस्मितफेनिलप्रमदपारावारपरिवर्धनतत्परं स्वांकालंकार

१ मनःपीडायाः स्थानभूते । २ इंद्रेण । ३ ऐरावणस्य । ४ देवैः 'बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः इत्यमरः'।

जिनचद्रिं वक्षसा भुजाभ्यां नावलंबमानो जन्माभिषेकलालसमानसः सौधर्मपतिर्नभोमार्गेण ससैन्य प्रतस्थे ॥

तूर्यारावप्रसरमुखरे व्योमभागे तदानीं ।
गद्यैः पद्यैर्ललितमधुरं नाकनाथे प्रक्लृप्ते ॥
जैनं स्तोत्रं श्रवणविषयं नाभवत्किंतु लेखैः ।
आसीज्जातं विचलदधरस्फारलीलायितेन ॥ ६३ ॥

ईशानवासवधृतं धवलातपत्र
प्रोद्भूतहेमकलशं प्रगुणं व्यतानीत् ॥
जन्माभिषेककुतुकेन समागतस्य
चंद्रस्य हस्तधृतसत्कलशस्य शंकां ॥६४॥

तदा खलु सानत्कुमारमाहेंद्रनाथकरकनीरेजकलितचारुचामरपंक्तिः जिनाभिषेकादरमेदुरतया समनुसृतपयःपारावारवीचिपरंपरेव, सुमुत्सुकमुक्तिलक्ष्मीप्रहितकटाक्षधारेव, भगवत्सेवार्थमनुप्रवहती सुरस्रवंतीव च विरराज ॥

तत्र किल विचित्रविविधवाहनान्यधिरूढेषु भवनव्यंतरज्योतिष्ककल्पनाथेषु ससैन्येषु जिनमभितः प्रचलितेषु,केचित्किरीटघटितपद्मरागप्रभाबालातपरुचिरवदनसरोजतया प्रचुरानुरागमतमेयत्वेन बहिरपि प्रसृतमुद्वहन्त इव, अपरे च विचलदेकावलीतरलमणिघृणिश्रेणिदंतुरितभुजांतरतयांतःप्ररूढजिनभक्तिनिःसारितहृदयस्थितमोहतिमिरनिकरमेदुरा इव, केचन तपनबिंबे रक्तोत्पलधिया धावमानं मत्तद्विपं निजवाहनं निवर्तयन्तः, परे पुनः सैनिकसमर्दितपांडुरजलधरखण्डेषु दध्योदनभ्रांत्या संभ्रातान्बिडालांस्ताडयन्तोऽन्ये च पुनस्तरलमुक्ताहारविसृतकांतिधारासु मृणालिनीशंकया संकुलान्हंसान्सान्त्वयंत,

१ एकावल्येकयष्टिकेत्यमरः । २ तरलो हारमध्यगः इत्यमरः ।

इतरे तावत्तारापथमचरत्सुरसिंधुरकरगलितफूत्कारकणगणांस्तारानिकरान्मन्यमाना, एके च सम्मर्दसत्रुटितभूषणमणिगणाज्ञानतः सचेलुः॥

पुरः प्रवृत्ता सेनाया प्रतीहारपरंपरा ॥
सुराद्रिं प्रापयामास सुरानीकं शनैः शनैः ॥६५॥

तदानीं सौधर्मेंद्र ईशानेंद्रादीन्प्रत्येवमुवाच—

हेमभूमिधरोऽप्येष महारजतशोभित.।
महतीं रीतिमादत्ते बहुलोहस्य गोचरः ॥६६॥

किं च—–

अगाभिख्यांचितोऽप्येष नागाभिख्यांचितो गिरिः॥
तथापि नमदानंदी मदानंदी च सोऽपि सन् ॥ ६७ ॥

असौ किल वृंदारकसंदोहसेवितपाद ,सकलदिगंबरोच्छ्रितमहिमा, सुवृत्तरत्नमंडितः, कल्याणाचितो, जातरूपधरो गिरीशोऽयं मंदरगिः, सततनिष्पतत्कल्पतरुपुष्पवृष्टिर्दिव्यध्वनिशोभितः, प्रथिताशोकसंपद दधानस्तथा चामरव्रजाविराजितः, स्फारदंडोज्ज्वलपुंडरीकमंडितः,

---

१-२ सुवर्णभूमिधरोऽपि महा अधिक रजतेन रौप्येण शोभितःइति विरुद्धं। परिहारःमहाराजत सुवर्ण । ३-४ बहुलोहस्य अयस' गोचरोऽपि महतीं रीतिं आरकूट [ पितळ इति महाराष्ट्रभाषाया ] स्वीकरोतीति विरोधस्त त्परिहार । रीतिं परिपाटीं सज्जनपद्धतिमित्यर्थः। पक्षे बहुल ऊहस्य गोचरो विषयः । ५-६ अगाभिख्याचितोपि न अगाभिख्याचित इति विरोधे परिहार' नागाभिख्याचितः गजशोभायुक्त. । ७-८ न मदानद्यपि मदानंदी. ति विरोधे नमता जनाना आनदी मदानदी चेति परिहार । ९ सेवितचरणः प्रत्यंतपर्वतश्च । १० दिग एव अंबर वस्त्र येषा ते तेपु उच्छ्रितमाहात्म्य पक्षे सकलदिगाकाशेषु व्याप्तमाहात्म्यः। ११ मगलगुणैः युक्तः पक्षे सुवर्णयुक्त. । १२ गिरां ईश । १३ मदप्रीति मंदरपर्वतश्च । १४ दिव्यध्वनिना शोभित., दिवि अध्वनि शोभितः । १५ च अमरव्रजेन शोभितः, चामरसमूहेन शोभितश्च ।

विचित्रसिंहासनोज्ज्वलः प्रभामंडलपरितः सुरानकरवतुलितघनाराव इति युक्तं किं भूयो माणिगणांकितः, पिहितदिगंबरदर्शनः, सितांशुक दधानः सर्वोत्तराशामाश्रितः, कांतारसामोदो, लतांगीकृतरुचिः, सदारामाचितः, सुरागख्यात इति विरुद्धं उपलक्ष्यते ।

अपि च—

पुष्यत्सुमनोवितर्तमंदारागस्य मंदरागस्य ॥
विलसत्प्रवालपंक्तेः केवलमाकारतो भेदः ॥ ६८ ॥

एष किल मेरुरूपशोभितस्तरूपशोभितो जातरूपशोभितश्च । गोपमहितोऽगोपमहितो नागोपमहितो नानागोपमहितश्च ॥ अपि च । अत्र च सुरांगनागानमुपवनं च मरुत्पूरितमंजुगुंजद्भृशं मदालयाचितं वि-

१ पिहित निराकृतं दिगंबरजैनमतं येन इति विरोधे पिहित आच्छादित दिशा आकाशस्य चावलोकन येन । २ श्वेतवस्त्र दधानः, सिताः अंशवः यस्य सः सितांशुकश्चंद्रः । ३ सर्वेभ्योऽपि उत्तरा बलिष्ठा आशा यस्येति विरोधे सर्वेषां उत्तरां दिशं आश्रित इति परिहारः । ४ कांतायाः रसे प्रीतौ आमोदो हर्षो यस्येति विरोधे कांतारेण उद्यानेन सामोदः सुगंधिः इति । ५ लतांग्या ललनाया कृता रुचिर्येन । लतानां अंगीकृतौ रुचिर्यस्य । ६ सदारामाचित' स्त्रीयुक्त' आरामाचित । ७ सुरागैः कल्पवृक्षैः ख्यातः सुरागेण प्रेम्णा च ख्यातः । ८ देवै' । ९ मंदार अगस्य । १० मेरोश्च । ११ देवसमूहेन पूरितमनोज्ञध्वानियुक्तान्त्रय सुरांगनागानं । वायुना पूरितमनोज्ञध्वनियुक्तमुपवनं । सत् आलय—अचित, सदालय अचितं गानं । विविधतालवृक्षसंगत उपवनं । विविध—ताल-संगतं गानं । सुरागै' कल्पवृक्षैः महित । शोभनरागेण महित । शृंगारादिरसेन अलस सदृशीकृत-कोकिलालाप । आम्रवृक्षै' समान्वितकोकिलालाप वनं ।

विधतालसगत सुरागमहित रमालसभावितकलकंठालाप च ॥

अत्रत्योपवनेषु सारसंगतान्यपि विसारसगतानि, मरालीमहितान्यपि अमरालीमहितानि, कूर्मितामुपगतान्यपि सूर्मितामुपगतानि । बहुळापांन्यप्यपापानि सरासि विलसंति ॥

इत्यादिकोमलवचोविसरै सुमेरुं
व्यावर्ण्य निर्जरपति सुरशैलमूर्ध्नि ॥
आसाद्य पांडुकवनं पृतनानिवेशं
तत्रातताान परित परितोषनिघ्नः ॥ ६९ ॥
वाहिनीं विनिवेश्यात्र वासवः आप निर्मलां ॥
तस्य प्रागुत्तराशायां पांडुकाख्यां महाशिलां ॥ ७० ॥

या किल महीमानिनीमस्तकायमानमहामेरूपरि लसितकबरीभरशंकाकरपाडुकवनस्य सितकेतुद्युतिमुन्निद्रयंती, सततमवलबराहिताचरतलसचारसजातश्रांतिविश्रात्यै सुरभिसमीरकिशोरमनोरमपाडुकवनमुपगतेवाष्टमदिकला पाडुकवनलक्ष्मीमौक्तिकशुक्तिरिवात्यतमवदातपर्यतभागयोर्जिनाभिषेकाय सौधर्मैशानेन्द्रयोर्विष्टर मध्ये च भगवत सिंहासन बिभ्राणा मंगलद्रव्यपरिशोभिता पुष्पापहाररुचिरा परित परिस्फुरद्रत्नकिरणपरीततया सुरचापमध्यगतशशाकरुचामनुकुर्वन्ती विद्योतते ॥

तत्र किल देवराजो विविधमणिखचितविचित्रस्तभसभृत

१ कमलसगतानि । २ जलसगतानि च ३ हसीसहितान्यपि । ४ देवपक्तिमहितानि । ५ कच्छपसमूहमुपगतानि । ६ शुभलहरीमुपगतानि । ७ बहुलजलानि । ८ पापरहितानि निर्मलानीत्यर्थः । ९ आनदायत्त. ।

वस्त्रागमहीजसमुद्भूतवसननिर्मितवितानविराजितं तारातरलमुक्तामाला-
विभूषितमवलंबितसुरभिकुसुमदामावकीर्णं चतुर्णिकायामरेंद्रवृंदसंकीर्णम-
भिषेकमंडपं विधाय तत्र सिंहविष्टरे जिनार्भकं पूर्वाभिमुखं निवेशयामास ॥

तदा दुंदुभिनिर्ध्वानो निरुद्धाशेषदिक्तटः ॥
समुज्जजृंभे सं तघनगर्जनतर्जन ॥ ७१ ॥

* इत्यर्हद्दासकृतौ पुरुदेवचंपूप्रबंधे चतुर्थस्तबकः ॥ *



# पंचमस्तबकः ।

तदनु जिनेंद्रजन्माभिषेकसभृतादरजंभालभेनिदेशपरवशः किंनरेशः कौतुकवशेन सर्वतः समापततो दिशामधीशान्सपरिवारान् करचलितमणिदंडेन तन्मंडपे हठाद्यथोचितं विनिवेश्य, भो भो मारुता निरंतरमवकरानिकरमपसारयत । अये मेघकुमाराः सुगंधिशीतलगंधोदकवृष्टिं कुरुत । हे दिक्कुमार्यो मुक्तामयरंगवल्लीभिर्नानाविधपत्रलताचित्राणि विरचयत।अयं किलेशाननाथः स्वयमेव धवलातपत्रं धत्ते । तदीयमृगलोचनाः पुनर्मंगलद्रव्याणि तरंगयतु । सनत्कुमारा जिनार्भकपरिसरे वाळव्यजनानि वीजयंतु । देव्यश्च बलिफलकुसुममालागंधधूपाद्यैः पात्राणि पूरयन्तु । नर्तका पुनः पटुपटहमृदंगादीनि सज्जयन्तु। वाणी च वीणां गायतु। सुरलासिकाश्च लास्यलीलामुल्लासयन्तु इत्यादिक्रमेण त्रिदशपतीन्भगवज्जन्माभिषेकसमुचितकृत्येषु नियोजयामास ॥

---

१इद्र. २अवकरनिकुरुबे मारुतेनापनीते।कुरुत धनकुमाराःसाधुगंधोदवृष्टिं ॥ तदनु च मणिमुक्ताभगरंगावलीभिर्विरचयत चतुष्कं सत्वरं दिक्कुमार्यः ॥ ५ ॥ अयमयमिह धत्ते छत्रमीशाननाथस्तदनुगतमृगाक्ष्यो मंगलान्युत्क्षिपन्तु ॥ जिनसविधममर्त्या नर्तिताबालवालव्यजनविधिसनाथाः सतु सानत्कुमारा ॥ ६ ॥ बलिफलकुसुमस्रग्गंधधूपाक्षताद्यैः प्रगुणयत विचित्राण्यत्रपात्राणि देव्यः॥ सलिलमिह पयोभेरेष्यति व्यंतराद्याः पटुपटहमृदंगादीनि तत्सज्जयतु ॥ इति श्लोकाः उपर्युक्तगद्यसमाना धर्मशर्माभ्युदयकाव्येऽष्टमसर्गे उपलभ्यन्ते ॥

व्यांकीर्णप्रचुरप्रसूननिकरे कर्पूरधूलीमिलद्
गंधक्षोदमनोहरे सुरभिले तन्मंडपे संगता ॥
भृंगाः कर्तुमुपेयुषां भगवतो जन्माभिषेकोत्सवं
त्रुट्यद्दुष्कृतशृंखलालितुलनां व्यातेनिरे व्याततः ॥१॥
ततो जिनार्भकस्यास्य वामदक्षिणभागयोः॥
सौधर्मैशाननाथौ तावासने स्वेऽधिरोहताम् ॥ २ ॥

तदनु स्वयंभुवः पयःपूरधवलशोणितपवित्रं गात्रं क्षीराब्धिरेव स्प्रष्टुमर्हति नान्यः स किल निम्नगानामधीशोऽतिवृद्धोयमाधिकतरजरसाक्रांतमूर्तिर्द्विपदरहितश्चिरममृतांधोजनक्षुभितः कथमत्युन्नतमिमं शैलमाधिरोहात्विति पर्यालोच्य तदधिरोपणाय परिकल्पितनीलोत्पलसोपानपंक्तयः, सौवर्णकपिशकलशमाला करे निदधाना नाकिजना गगनांगणे निरंतरनिचितसांध्यवलाहकविलासं तन्वानाः, सौधर्मैशाननाथसिंहासनप्रदेशादारभ्य पयःपारावारतीरपर्यन्तं पंक्तिशो द्विधा समवस्थिताः, प्रवालैपरिशोभितं घनैपुष्पोज्ज्वलमिदमपि पाण्डुकवनं इति मत्वा वनाद्वनांतरं प्रतिनिवृत्ताः पात्रागसुरद्रुमा इव व्यराजत ॥

मुक्तादामपरंपरावृतमुखान्गांगेयकुंभान्करे ।
कुर्वाणास्त्रिदिवौकसो जलनिधिः संवीक्ष्य तीरागतान् ॥
भूयस्ते भुजगेंद्रवेष्टनलसन्मंदाचलान्विभ्रतः

१ बहलमलयजन्मोन्मिश्रकर्पूरपांसुप्रसरपरिमलाघ्राः श्रेणयः षट्पदानां ॥ जिनपतिमभिषेक्तुं वाञ्छतां त्रुट्यदेनोनिगलवलयतुल्या निर्लुठन्ति स्म तस्मिन्॥ धर्मशर्माभ्युदयेऽष्टमसर्गे दशमः श्लोकः उपर्युक्त श्लोकमनुरति । २ किसलयेन, विद्रुमेन ३ जलोज्ज्वलेन, निबिडपुष्पोज्ज्वलेन च॥ ४ मंदरपर्वतान् ।

प्राप्ता इत्यधिकाद्भयादिव चलेद्भंगैश्चकंपे तदा ॥३॥

यः किल वाहिनीपेतिरिव वाहिनीपतिश्चलितविमलतरवारिशोभितश्चापांचितो घनकीलालकलितमूर्तिरुद्दडकांडमंडितः पुगे नर्तितकबधः पृथुलहरिजालकोलाहलमुखरितदिक्तटश्च, किं त्वयं बहुभगेषु सत्स्वपि प्रगर्जत्येव स तु भगे सति पराजयते इति विशेषः ॥

य खलु भुवनपातिरिव भुवनपतिरिति शोभनक्रमकर., सर्वतोमुखसपदाढ्यः स्वर्णस्थितिसंपन्नः, परिस्फुरद्रत्नमंडितश्चंचदूर्मिकोज्ज्वलः समुद्रश्च किं तु नदेशोविख्यातो देशाविख्यातो न वसुधाविभवहेतुर्वसुधाविभवहेतुर्नक्षत्रपबधु क्षत्रपबधुर्गरोल्लासनिदानं नगरोल्लासनिदानं

---

१ चलल्लहरीभि. । २ सेनापतिरिव । वाहिनीना नदीना पति' समुद्र. । ३ विमलतर–वारि, सेनापतिपक्षे विमल-तरवारि । ४ च अपा चित जलपूर्ण इत्यर्थ' पक्षे चापाचित. धनुषा युक्तः । ५ कीलाल रुधिर जल च । ६ दीर्घबाणालकृत. पक्षे विपुलजलमडितः । ' काडोऽस्त्री वर्गबाणार्थनलावसरवारिषु ' इति विश्वलोचनः । ७ नर्तिताःपमूर्धकलेवर. नर्तितजलश्च। ८ पृथुल-हरिजाल पृथुललहरीजालो। ९ जगत्पतिरिव, पक्षे भुवन जल तस्य पतिः सागर इत्यर्थः । ११ शोभन-क्रमकरः, शोभ:नक्रमकरः। ११ सर्वतो मुखा चासौ सपत्तयाढ्यः पक्षे सर्वतो मुख जल तदेव संपत्तयाढ्यः। १२ स्वर्ण–स्थितिसंपन्नः पक्षे सु अर्णस् स्थिति संपन्नः शोभनजलभृत इत्यर्थः। १३ ऊर्मिका अगुलीयक, लहर्यश्च । १४ नदाना ईशस्तेन विख्यातः। १५ न वसुधाविभवहेतुः नवसुधाविभवहेतुर्नवपीयूषोत्पत्तिनिदान । १६ महीवैभवकारण च.। १७ नक्षत्राणि पाति इति नक्षत्रपश्चद्रस्तस्य बधुः सागरः । १८ क्षत्र पाति इति क्षत्रपाः राजानस्तेषा बधु' । १९ गर विष ।

रसंसहितो नरसहित इति विशेष ॥

यः पुनर्धार्मिक इव सज्जनक्रमकर, सिंधुरवधनप्रदेश इव वारिगतानेकनाग, सत्पुरुष इव गोत्रातिशायः, पृथ्वीपातिनिलय इव प्रदृश्यमानमहापात्र, गणिकासमूह इव घनतरुणाचितसविधप्रदेश., श्रीजिनराज इव विकासितकुमुदपराग प्रकटितगाभीर्यमहिमा च विषराशिरप्यमृतरांशिरगतिर्वृद्धोऽपि कांतारागाचित गजने ॥

कनककलशजाल क्षीरवार्धौ निमज्जत् ।
विगदरुचिरमुक्तातारकाभि परीत ॥
सकलकलमुदचच्चद्रसाम्यं मपेदे ।
धवलपधुग्दुग्धोद्योतसज्ज्योत्स्नयेद्धं ॥४॥
अथ सुरकरैर्नीतान्क्षीराब्धिसज्जलपूरितान् ।
कनककलशानेतावद्रौ तदा विकृतैर्भुजैः ॥
दशशतमितैर्मोदात्स्वीकृत्य मूर्ध्नि जगद्गुरो- ।
र्जयजयजयारावैः सार्धं न्यपातयतां तदा ॥५॥
ततो जय जयारावमुखरीकृतदिक्तटाः ।
कल्पेश्वरास्तदा हर्षात्समं धारा न्यपातयन् ॥६॥

सा किल पयोधार कुंभस्थलायमानमिलितकनककुंभद्वयविगलिततया-

---

१ रसो जल । २ सज–नक्र·मकरः, सज्जन–क्रमकरः । ३ वारी तु गजवधनीत्यमरः । पक्षे जलगतानेकजलेभः । ४ गोत्रमन्वयः पर्वतश्च । ५ देवसमूहेन नीयमानपात्रः । ६ घनतर-तरुण अचित घनतर-तरुण अचित । ७ कुत्सितमते अपरागः, जिनः । कुमुदपरागः समुद्रः । ८ विरोधपरिहारः एव विष जलं । ९ सुधा । अतिशयेन जरन्नपि कांतारागाचित इति विरोधे परिहार कांतार—अग—अचितः ।

खडलशुंडालशुंडादंडशंकामकूरयती जिनार्भकमुत्संगे वहत्या पाडुक-वनलक्ष्म्याः कनककुभकुचयुगलव्यामुक्तमुक्ताहारकांतिभरी तच्छिरसि पततीति विद्याधरनिकरेणोत्प्रेक्षमाणा वदनरुचियशोवैशद्याभ्या वि-जितयोः सेवार्थमागत्य नभसि सन्निहितयोर्जंबूद्वीपसंगतयो· सुवर्णवर्ण-भगवद्दिव्यदेहकातिसक्रांतिवशेनारक्तमंडलयो. शशाकयोर्बिंबयुगलान्नि·-सरती कौमुदीति पश्यता मतिं जनयती, अयं किल जिनार्भकः परमे-हिमाचित, सर्वसुपर्वजनसेव्यमानपादो महीधरसानुचराविद्याधर-परिवृतः, सकलदिगंबरोन्नत स हिमालयो गिरीश इति मत्वा समाप-तती सुरस्रवंतीव च व्यराजत॥

सैषा पांडुशिला विपांडुरलसत्कदस्य लीलां दधे
तत्रायं जिनपोतक· समतनोत्पुण्यप्ररोहश्रियं ॥
धारा क्षीरमयी रराज विचलत्कांडश्रियं बिभ्रती
कुंभाः पुण्यलताफलालितुलनां व्यातेनिरे व्याततः ॥७॥
यद्वा सा व्यतनोज्जिनांगविसरत्कांत्या परीता पयो—
धारा प्रोद्धतरुक्मकांडतुलनां हेम्ना समानच्छविः ॥
दूरं व्योम्नि समुद्गता जलकणाश्छत्रश्रियं तेनिरे
तन्मध्ये कलशश्रियं समतनोत्कुंभस्तदा कश्चन ॥८॥

अय खलु जिनबालकवलाहको बहुधाराराजितो हानिदाघ शमयति,

---

१ पर—महिमाचितः उत्तममाहात्म्योपेत. । २ सर्वामरजनसेव्यचरणः। पक्षे सर्वामरजनसेव्यप्रत्यन्तपर्वतः । ३ सकलदिशाकाशमभिव्याप्य उन्नतिं गतः पक्षे सकलमुनिषु उन्नतिं प्राप्तः । ४ हि मालयो मायाः लक्ष्म्याः आल-यः पक्षे हिमालयो नाम पर्वतः । ५ मेघः बहुधाराराजितः पक्षे बहुधा-राराजितः शोशुभ्यमानः । ६ हा— निदाघं, पक्षे हानिश्च दाघश्च·पापं च ।

कीर्तिमुत्पादयति, धर्मामृतवर्षेण भव्यमानसस्य समुल्लासं करिष्यतीति च युक्तं, तथाप्यसौ पंक्रं नाशयति सदामरालिसंतोषं विशेषयति, चंचलानंदं त्यजति, समुज्जृंभितापं मेघाटोपं निर्मूलयति तथा स्वयमधःस्थितः सन् ऊर्ध्वं घनपुष्पवृष्टिं संपादयिष्यतीति विचित्रघनाघनोऽयं सकलभुवनभृतामाधिपत्येऽभिषेक्तव्य इति मत्वा किल सुरेंद्राः क्षीरवाराशिपयःपूरेण तमास्यसिंचन् ॥

मरुद्भेरीरावैरितरसुरवादित्रनिनदैः
जयारावैर्नृत्यत्त्रिदशसुदतीनूपुररवैः ॥
तथा वंदिव्रातैः पठितजिनराजस्तुतिरवैः ॥
अभूच्छब्दाद्वैतं परकथितमध्यक्षविषयं ॥ ९ ॥

तदानीं खलु प्रजव प्रचलितः प्रचुरतरपयःप्रवाहः क्वाचिद्विचित्ररत्नकांतिपरीततया द्रवीभूतेंद्रचापशंकाकरः, क्वचन विद्रुमप्रभारजिततया एकत्र निलीनघनतिमिरशंकाकरः, क्वाचिन्मरकतमणिघृणिसंगततया हरितांशुकच्छायः, एकत्र प्लावितानां सुरसैनिकानां क्षीराब्धिमज्जनमिव विदधानः, पत्रशाखाशिखाग्रदर्शनानुमीयमाननंदनवनकर्षणः समेरुमभितः प्रससार ॥

किं रौप्याद्रिरयं घनः किमु सुधाराशिः क्वचित्संगतः
किंवा स्फाटिकभूधरः किमथवा चंद्रोपलानां चयः ॥
आहोस्वित्त्रिजगच्छ्रियो धवलितः सौधः सुधासेचनैः

१ पंकं कर्दमं पापं च 'पंकोऽस्त्री कर्दमे पापे' इति विश्वलोचनः। २ चंचलायाः आनंदं पक्षे अनित्यं आनंदं। ३ समुज्जृंभितापः यस्मात् एतादृशं मेघाटोपं पापविस्तारं। पक्षे समुज्जृंभिताः आपो जलानि यस्मिन् सः तं मेघाटोपं—जलदविस्तारं ॥ ४ निबिडपुष्पवृष्टिं पक्षे जलवृष्टिं। 'घनपुष्पं मेघरसं' इत्यमरः। ५ विजयार्धपर्वतः।

इत्थं व्योमचरैर्व्यलोकि कनकक्षोणीधरः कौतुकात्॥१०॥

तदानीं गगनमुत्पतिताः प्रचुरकराः कुंदावदाता मेरुमहीभृतः श्वेतातपत्रविभ्रमं तन्वानाः, गगनलक्ष्म्याः सुपर्वजनसमर्दवशेन स्फुटितमुक्ताहारमणिसंदोहसंदेहं सदधानाः, श्रीमदर्हत्कीर्तिलताबीजराजिशंकासंपादका नभोऽङ्गणपुष्पहारायमाणाः, दिक्सुंदरीकर्णपूरायमाणाः स्नानपयःपृशीकरनिकराः क्रमेण निविडिताः प्राप्तज्योतिर्लोकास्तत्र तारागणेषु क्षणं पयःस्रवणशालितया करकाशंका, क्षणमुन्मज्जनवत्तया बुद्बुदमतिं, क्षणं डिंडीरखंडमंडिततया शुक्तिकाशकलसंगतमुक्तामणिविभ्रमं, क्षणं संजवनसमाकृष्टनंदनवनतरुशाखाशिखालग्नतया कुसुममनीषामुत्पादयतस्तपनबिंबे क्षणं कृतजलाकर्षणतया महांस्तप्तायःपिंडः पानीयं पायित इति संभावनां, क्षणं कोकनदबुद्धिं तन्वानाः, सुधाकरबिंबे च क्षणं जरन्मरालमतिं, क्षणं शंखशंकां, क्षणं कुमुदधियं, क्षणं घनफेनपुंजधिषणां विदधानाः, अनुप्राप्तमहीतलाः जिनचंद्रोदयविधृतसकलचंद्रकांतशिलागलितपयःप्रवाहा इव, जगद्गुरुसंगतरंगिताः सुरमहीभृतः संमदाश्रुपूरा इव प्रस्रुताः स्वच्छतरप्रवाहाः, अयं भुवनैकपालकः सगोत्ररक्षणदक्षः पारावारः सुरेन्द्रभीतानां महीधराणां शरणमिति मत्वा गिरिराजेन सुमेरुणा सागरायोपढौकिता निर्मल-

---

१ मेरुपर्वत। २ शीकरोऽम्बुकणाः स्मृताः ३ वर्षोपलस्तु करका इत्यमरः। ४ नक्षत्राणि, जलसंरक्षकश्च। ५ गोत्रा पृथ्व्यां क्षिताः सगोत्राः राजानस्तेषां रक्षणे दक्षः। पक्षे गोत्राः पर्वताः तेषां रक्षणे दक्षः। यदा सुरेन्द्रः पर्वतपक्षान्पाटयितुमुद्यतोऽभूत्तदा केचन पर्वताः समुद्रं शरणं गता इति कथाऽनुसंधेया।
६ पु. अंपू

पटनिकरा, इति शक्यमानास्तरंगिणीकांतमवापुः।

शुद्धांबुस्नपने निष्ठां गते गंधांबुभिः शुभैः॥
ततोऽभिषेक्तुमीशानं शतयज्वा प्रचक्रमे ॥११॥

चचच्चंदनकल्पकद्रुकुसुमैः कर्पूरचूर्णैस्तथा ।
संमिश्रा सुरहेमकुंभविगलच्छ्रीगंधपाथोझरी ॥
क्षीरांभोधिपयःप्रवाहधवलं मेरुं हिमानीगिरिं
मत्वा तत्र समापतंत्यातिनगं गंगेव तुंगा व्यभात्॥१२॥

तस्या खलु गंधोदकनिम्नगाया जिनार्भकादिव्यदेहसौगंध्यसंजात-लज्जाभरेणेवावाङ्मुखतया प्रवहन्त्या, कृतावभृतमज्जनाः सुरजनाः धूपदीपगंधाक्षतादिभिर्देवदेवं पूजयामासुः ॥

नटत्सुरवधूजनप्रविसरत्कटाक्षावलिं ।
कपोलतलसंगतां त्रिभुवनाधिपस्यादरात् ॥
सुराधिपतिसुंदरी स्नपनतोयशंकावशात्
प्रमार्जयितुमुद्यता किल बभूव हासास्पदं ॥१३॥

तदनु सा किल पुलोमजा भगवदंगसंगतजलकणगणं विमलदु-कूलांचलेन संमार्ज्य, त्रिभुवनतिलकस्य तस्य ललाटतटे तिलकं परिक-ल्प्य, निसर्गरंध्रयोः श्रवणपुटयोः किमपि तत्वरहस्यमधिगतुमुपागत-

---

१ इंद्रः। २ विशदमणिमयाभ्यां वज्रसूचीविभिन्नश्रवणयुगामिताभ्यां कुंडला-भ्यां स रेजे॥ किमपि समधिगन्तुं तत्त्वविद्यारहस्य सुरगुरुभृगुपुत्राभ्यामिव ज्ञान-सिंधुः॥ त्रिगुणवलितमुक्तातारहारापदेशादुरसि वरणमालाः प्रक्षिपन्त्यस्तदानीं॥ अहमहमिकयोर्वी श्रीश्च मुक्तिश्च तिस्रः स्वयमपि वृणते स्म प्रेमवत्यस्तमेकम् ॥ निरुपममणिमाला तन्मुखेंदोरुपान्ते विगलदमृतधाराकारसुन्मुद्रयन्ती ॥ शशिनममलकान्त्याक्रम्य वंदीकृताना विततिरिव विरेजे तत्प्रियाणामुडूनाम् ॥ उपरितनं गद्यखंडं धर्मशर्माभ्युदयाष्टमसर्गस्थश्लोकानुकारीति प्रतिभाति ॥

मिव शुक्रसुरगुरुयुगलं तस्यामानवचरितं तन्मुखस्य च महादर्शलीलां च प्रकटयितुमायातमिव चद्रसूर्ययुग्म मणिकुडलद्वितय संयोज्य, गलशखगलितमुक्ताभिरिव मुखशशिना राकासुधाकर कलाचातुर्गुण्येन विजित्य बंदीकृताभिरिव तत्प्रियाभिस्तारकाभिर्मुक्ताधिकसपदमयमनुभविष्यतीति प्रकटयतीभिर्मौक्तिकपरंपराभिर्घटितां कीर्तिलक्ष्मीभिर्मुक्तिलक्ष्मीभिरार्हन्त्यलक्ष्मीभिरिवाहमहमिकया समर्पितत्रवरणमालात्रितयशंकाकरीं त्रिगुणवलितमुक्तामालां कठदेशे समर्प्य, करसरोजानुरागसमायाततपनशंकाकरमणिकक्ण करयोः कल्पयित्वा, नाभिजघनरुचिरतया, सद्वृत्तरत्नशोभिततया, कल्याणगुणगुंभिततया मणिकिंकिणीकलापस्य मध्यस्थता युक्तेति मध्यप्रदेशे तमर्पयित्वा, ससारसागरस्य तारकमिदं चरणयुगलमिति नखच्छलेन समाश्रितानां तारकाणां ततिमुल्लासयितुं सान्निहितेनेव, यद्वा कांत्या कामितार्थप्रदानस्फूर्त्या च सुरागतामिदं बिभर्तीति मत्वा तत्प्रादक्षिण्यक्रममुपगतेनेवाथवा प्रौढशोभनर्खाश्रिततया सत्समूहसेव्यतया शुभकरतया तिमिरनिकरनिराकरणचतुरतया च पदयुग मम बंधुतां स्वीकृत्य मम विप्रिय पंकजातं निर्मूलयतीति स्नेहादुपगतेनेव शीतकरबिंबेनेव घनवज्रनूपुरेणांघ्रिद्वयमलचकार ॥

---

१ नाभिप्रदेशजघनप्रदेशाना मनोहरतया । २ वर्तुलरत्नशोभितया । ३ स्वर्णतंतुयुक्ततया । मगलगुणयुक्ततया । ४ सुराणां अगः कल्पतरुरित्यर्थः । पक्षे आरक्तवर्णत्व । ५ प्रौढ शोभन– खाश्रिततया प्रौढशोभ–नखाश्रिततया च । ६ सतां सज्जनाना समूहः । पक्षे सता नक्षत्राणा समूहः ७ पकजातं दिनविकासि कमल । पक्षे पापसमूह

एवं शच्या भूपितं देवदेवं
पायं पायं लोचनैस्ते सुरेंद्राः ॥
आनंदाब्धौ मज्जनोन्मज्जनाढ्या
इत्थं स्तोतुं प्रारभन्ते स्म भक्त्या ॥ १४ ॥

भजार्मस्त्वां लोकाधिप! तव पदांभोजयुगलं।
श्रितो भूपो नृणां द्विपद इति कीर्ति स भजते ॥ १५ ॥
नरो यस्त्वत्सेवाविमुखहृदयस्तं बुधवरा ॥
चतुष्पादं प्राहुर्वत विमलकारुण्यजलधे! ॥ १६ ॥
तव देव! पादपद्म यो देही भजति विमलतरभक्त्या ॥
अत्र परत्र च चित्रं शब्दं देहीति स खलु विजहाति ॥ १७ ॥
बहुलंघनैरपि विभो! दुर्वारं जिनप! भवमयं रोगं ॥
त्वन्नामकीर्तनौषधसेवनतः सज्जनाः प्रशमयन्ति ॥ १८ ॥
त्वन्नामकामधेनुः सुरवा गोष्ठप्रकामरुचिहेतुः ॥
सुपदा शोभनवर्णा जिननाथ! समस्तकांक्षितं सूते ॥१९॥

इति स्तुत्या सह जिनाभिषवं समाप्य दुंदुभिनादकाहलीकलकलजयघोषणादिभिर्मुखरितदिङ्मुखास्ते पुरंदरप्रमुखा बर्हिर्मुखाः साकेतपुरागमन

---

१ हे जिन यो नरस्त्वत्पदकमलयुगं भजते स नृणां भूपो भवति। स एव द्विपद इति कीर्तिं प्राप्नोति। यस्तु त्वत्सेवाविमुखः स चतुष्पाद् पशुरिति विद्वांसो ब्रुवन्ति। २ विमलभक्त्या तव पदयुगं भजन्देही—प्राणी आश्चर्यमिदं देहीति शब्दं परित्यजति अर्थात् देहीति लोकानां पुरतः याचनावचनं नोच्चारयति। अथवा देहीति शरीरीति शब्दं विजहाति इत्यस्य मुक्तो भवतीत्यर्थः ३ त्वदीयं नामैव कामधेनुः। ४ सुशोभनो रवः ध्वनिस्तेन युक्ता। ५ शोभनचरणोपेता मधुरशब्दोपेता। ६ मनोहरश्वेतादिवर्णा। मनोहराक्षरोपेता च।

समुखा गगनतलमुत्पत्य क्वचिन्मणिभूषणगणकांतिबालातपेन हर्षितचक्रवाकाः, क्वचिन्मुक्तामरीचिवीचितोषितचकोराः क्रमेण सुगंधिगंधवहस्तनंधयव्यालोलविमलपताकापटैः सुरनिकरमाव्हयंतीमिव विलसतीं साकेतपुरीं अभितः सप्तांगबलानि निवेश्य, प्रविश्य च तत्र निराकृतसुरालयं नाभिराजालयं सुरविरचितविविधमणिगणरुचिनिचयरुचिर भ्रमरततिविततसुरतरुकुसुमसुरभितश्रीगृहांगणशोभितसिंहविष्टरे तं जिनार्भकं निवेशयामासुः ॥

सुतमुखनिशाधीशालोकप्रवृद्धमुदंबुधि-
प्रवरजठरे मग्नाविंद्रो जगत्पितराविमौ ॥
स्मितयुतमुखः सर्वं वृत्तं निवेद्य तदादरात् ॥
प्रमदजलधेः पारं तौ दंपती द्रुतमानयत् ॥ २० ॥

तदनु महार्घमणिभूषणमाल्यवसनादिभिर्मरुतां पतिर्मरुदेवीनाभिराजौ पूजयित्वा युवां खलु जगद्गुरोरपि गुरुतया महापूज्यौ पुण्यधनकोशायमानौ जिनतपनसदुदयपुरंदरकाष्ठापूर्वाचलावित्यादिप्रकारेण तुष्टाव ॥

नाभिक्ष्मारमणस्तदा समतनोत्तज्जातकर्मोत्सवं ॥
शक्रस्यानुमतेः प्रमादवशगैः पौरैः समं सादरैः ॥
यस्मिन्वाद्यरवैरपूर्यत जगत्स्वेष्टैस्तथाशार्थिनाम् ॥
मोदैः पौरजनस्य चित्तसरणिर्नेत्रं प्रमोदाश्रुभिः ॥२१॥
तत्तादृक्षमहोत्सवे पुरजनान्मोदांबुराशेः परं
पारं प्राप्तवतो निरीक्ष्य बहुधा सोऽयं सुराणां विभुः ॥
आनंदोद्यतनाटके कुतुकतश्चित्तं दधेऽसौ चिरा-

दानंदं निजमांतरं प्रकटयन्नुन्मस्तकं निस्तुलं ॥ २२ ॥
वक्ता नाट्यागमानां कुलिशधरवरो नाटके सन्नटोऽभूत् ॥
यस्मिन्द्वाभिक्षितीशप्रमुखनरसुराः प्रेक्षकाः श्रीजिनेशः ॥
आराध्यो रंगभूमिस्त्रिभुवनवलयं तत्फलं तु त्रिवर्ग—
प्राप्तिस्तन्नाटकस्य त्रिदशकृतनुतेर्वर्णने को नु शक्तः ॥२३॥
अथापि कविजनसमुचिताचारानुसारेण किंचिद्व्यावर्ण्यते ॥

स खलु मघवा घनौघसंघविघाताय समाहितः सकलबलारिप्रमुखसुराधिपप्रकटमुकुटतटघटितजंभारिमणिजृम्भमाणमेचकरुचिनिचयवलाहकविलसितचलाचलशंपाकुलशकामांतिसंपादकन्यामुक्तमुक्ताफलनिरर्गलनिर्गलत्प्रभापटलपुनरुक्तनखचन्द्रचन्द्रिकानंदितपुरीजनसुरीजननयननीलोत्पलस्य भगवतो जिनराजस्य चरितमधिकृत्य प्रवृत्तं, प्रदीप मिव प्रकटितदशावतारं, पाण्डुकवनमिव जन्माभिषेकसंगतमेकनेत्रांचितमपि सहस्रनेत्रांचितं किमपि रूपकमभिनेतुं प्रवृत्तः कृतमंगलालकारो मूर्तिमानिव नाट्यागमः, कामिनीमिव सदामरालिसन्नुतमृदुपदन्यासां सुवर्णालंकारशोभितां च, मुक्तावलिमिव सुगुणा मुनायका

१ विपुलपापसमूहविनाशाय । २ इन्द्रः । ३ इंद्रनीलमणिः । ४ प्रकटितानि दशावताराणि दशजन्मानि यस्मिन् तत् । पक्षे प्रकटितः दशाया वर्तिकाया अवतारो यस्मिन् । ५ विरोधः परिन्हियते एकनेत्राचित एकनायकोपेतं सहस्राणि नेत्राणि नयनानि यस्य सहस्रनेत्रः इन्द्रस्तेन युक्त । ६ सदा मरालिपाक्षिसन्नुतमृदुपदन्यासा कामिनी । अमरालिभिः देवपंक्तिभिः सस्तुतमृदुशब्दरचनोपेता नांदी ७ हेमाभरणशोभिता कामिनी । शोभनाक्षरोपेता उपमाद्यलकारोपेता नांदी । ८ शोभनतंतूपेता । शोभनकान्त्योजःप्रसादादिगुणोपेता नांदी च । ९ मध्यमण्युपेता । शोभननायकपरा नांदी । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' । इति विश्वलोचनः ।

सन्वृत्तरत्नमण्डिता च, अनुपमामपि उपमाचितां, बुधजनकलितश्लाघामपि विबुधजनकलितश्लाघा नांदीं प्रयुज्य रंगमवतीर्णः पीतावशेषं नाट्यरसं स्वयं विभजन्निव पुष्पांजलिं चिक्षेप ॥

पुष्पांजलिः पतन्रेजे मत्तालिभिरनुद्रुतः ॥
नेत्रौघ इव वृत्रघ्नः कल्माषितनभोङ्गणः ॥२४॥

ततः किल नानाविधवाद्यमुखरीकृतदिगंतरे, तद्रंगस्थलांतरे मरसमुद्धताभिनयप्रायमारभटीयवृत्तियुक्तं तांडवमारभमाणः, परितः प्रसृतया कटाक्षधारया यवनिकाविभ्रममुद्भावयन्, व्यालोलमुकुटव्यालग्नरत्नप्रभाभिर्दिशि दिशि सुरचापशंकामंकुरयन्, चचलमुक्तामणिभिरभिनभःस्थल सौदामिनीसहस्रभ्रमं संपादयन्, निजभुजशाखासहस्रे कलितनर्तनानप्सरोजनान्क्षण गूढं क्षण प्रकाशं च सचारयन्क्षणमेकः, क्षणमनेकः, क्षणं व्यापी, क्षणमणुः, क्षणमदूरे, क्षणं दूरे, क्षण दिवि, क्षणं भुवि, विलसमानः परितो नाट्यरसमुत्तरंगयामास ॥

तदा तादृङ्नाट्ये विलसति बलारातिकलिते ।
भुजोल्लासक्षुभ्यज्जलदविगलद्वारिपृषतां ॥
सुरश्रेणीवृष्टप्रचुरकुसुमानां च पततां ।
विशेषो विज्ञातो मधुकरवितत्या विततया ॥ २५ ॥

अथ किल वज्रधरः पुरा शिलामयान्पुंरूपान्धरान्बिभेदाह किल-

---

१ वर्तुलरत्नशोभिता । शोभनहरिण्यादिवृत्तोपेता नांदी च । २ अनुपमा अपूर्वा उपमालंकारेण युक्ता च । ३ विद्वज्जनप्रशंसोपेता । ४ देवजनकृतप्रशंसायुक्ता । ५ इंद्रस्य । ६ जलकणाना 'पृषन्ति बिंदुपृषताः पुमांसो विप्रुषः स्त्रियां' इत्यमरः । ७ विस्तार प्राप्तया । ८ पुल्लिंगरूपान् ।

मृण्मयी स्त्रीरूपा धरेति भयेनेव पुरदरपरिचितेन क्रीत्रिनापि बहुधा चलेन नाट्येन पुंरूपा एव अचलाः कंपिता अह तु स्त्रीरूपा चलेति मत्वा किल काश्यपी तदा कंपमाससाद ॥

तालशोभि ललिताप्सरोज्ज्वल चित्तहारि ततवेणुनिःस्वन ॥
हंसकध्वनिमनोरमं बभौ तद्यथोपवनमिंद्रनर्तनम् ॥ २६ ॥

तदानीं श्रव्यमपि दृश्यानुगुणतयैव गंधर्वा एव प्रकटयामासुः ॥

धिक् तां कुतीर्थराजिं धिक् तां तत्कल्पितां मतप्रौढीं ॥
धिक् तांस्तवद्वयप्रकटान् धिक् तान्ये नात्र संगता भगवन् ॥२७॥
धर्माध्वानि चिंतकृतां मदनांतकृतां भवार्तिकृंतकृतां ॥
मुक्तिश्रीकांतकृतां प्राप्स्यासि संलातसकलजंतुकृतां ॥२८॥
मुक्तिश्रीनेपथ्यैः सुरनरपथ्यैः प्रतीतसद्रथ्यैः ॥
कर्मारिविजयरथ्यैर्दिव्यध्वनिभिर्भविष्यसि सुतथ्यैः ॥२९॥
एवं नाकाधिराजस्य नर्तनं पुण्यवर्धनं ॥
दृष्ट्वा नाभिमहीपालो देव्या सह विसिष्मिये ॥ ३० ॥
वृषो धर्मस्तेन त्रिभुवनगुरुर्भाति यदयं ॥
ततो नाकाधीशो वृषभ इति नामास्य विदधे ॥
जनन्या सुस्वप्ने विबुधनुतनाकावतरणे ॥
तया दृष्टः श्रीमान्वृषभवररूपः स इति वा ॥ ३१ ॥

---

१ पृथ्वी । 'क्षोणिर्ज्याः काश्यपी क्षितिः' इत्यमरः । २ तालो नाम वृक्षविशेषः ताडवृक्ष इति महाराष्ट्रभाषाया पक्षे तालः कालक्रियामानं । ३ अप्सरसो देवागनाः पक्षे सरासि । ४ वंशवाद्यविशेषः । ५ हंसपक्षिणः पक्षे नूपुराणि । ६ नेपथ्यैः आकल्पैः 'आकल्पवेषौ नेपथ्य प्रतिकर्म प्रसाधनं' इत्यमरः । ७ देवमनुजहितकरैः । ८ रथ्याश्वैः । ९ यथार्थैः

तदनु पुरुहूतस्तस्य जगद्गुरो. मज्जनमडनसंस्कारक्रीडनादिचतुरान् देवीनिकरान् समानवयोरूपवेषान् प्रकटितमनोविनोदनतत्तद्विकृतिसमुन्मेषान्मुरकुमारविशेषांश्च परिचर्यायां नियोज्य निखिलनिर्जरबलेन सह निजभवनमुपजगाम ॥

जिननंदनद्रुमोऽयं सिक्तो देवैः स्वकालवालेद्धः ॥
स्मितकुसुमानि दधे द्राक् तन्वानस्तत्र कांचनच्छायां ॥३२॥

अलममितफलप्रदानचतुरस्य निरवधिकश्रीविराजितस्य विजितमारस्य जिनकुमारस्य सुमितफलप्रदानचतुरैः सूनश्रीविराजितैः स्वयमेव पचंतामुपगतैः कल्पद्रुमैरुपमानवार्तया ॥

जिनबालशीतरश्मिर्जीवंजीवं प्रति महर्षकरः ॥
स्मितचंद्रिकां वितेने सकलकलावल्लभः सदानंदी ॥ ३३ ॥

अलं अल सिद्धांतविदितमहिम्नः कलंकरहितस्य दोषकथातीतस्य विमलमतेर्जिनबालस्य पूर्वपक्षविदितमहिम्ना सकलंकेन दोषाकरेण जडव्युत्पन्नेन चंद्रेणोपमित्या ॥

सर्वतो मुखसमृद्धिसमेतो मानसस्य परितोषणहेतुः ॥
द्रागबभार जिनपोतपयोदो हासकांतिमयविद्युतमिद्धां ॥३४॥

कृत निश्चलानदसुदरस्य सकलभुवनोद्धरणदक्षस्य समाश्रितानाममृतंप्रदस्य निखिलमनोहरदिव्यध्वनिं प्राप्स्यतो जिनार्भकस्य चंचलानदसुद-

---

१ शुश्रूषायां। २ स्व–काल–वाल–इद्धः, आत्मनः कृष्णकेशेन इद्धः भगवान् ॥ पक्षे स्वक–आलवाल–इद्धः नदनद्रुमः ॥ ३ सुवर्णकान्ति, अनिर्वचनीयां छाया। ४ सु–ऊनश्री. इति ध्वनिः पक्षे पुष्पश्रीः। ५ पचता मरणत्व पक्षे पचसख्यात्व। 'पचता मृत्युमात्रेऽपि पचभावेऽपि पचता' इति विश्वलोचनः। ६ चित्तस्य पक्षे मानसरोवरस्य। ७ मोक्षप्रदस्य।

रेण सकलभुवनान्यधः पातयता समाश्रितानां विषप्रदेन कठोरगर्जनेन जलदेनोपमया ॥

पीठबंधः सरस्वत्या लक्ष्म्या हसितविभ्रमः
कीर्तिवल्ल्याविकासोऽस्य मुग्धास्मितमयोऽभवत् ॥३५॥
मुखवारिजं विलोलं नयनभ्रमरं स्फुटाधरोष्ठदल ॥
दंतांशुकेसराढ्य स्मितमकरंदं दधे कुमारस्य ॥ ३६ ॥

एतन्मुख वारिजं च कुलराजाविद्वेषतया लक्ष्मीनिवासभूततया च समान अथापीद वदन मन्मनवचनामृताविशोभितं रत्नभूषणैरलंकारमाश्रितं सुमनोजनसेवित च, नलिनं पुनर्विषजातविख्यात स्वर्णस्फूर्तिमाधिगतमपि सर्वतोमुखसपदाढ्यमपि बहूर्मिकाहसककर्णिकादिकालितमपि अपाढ्यगुणान्नालमिति शब्दमाभिगम्य मार्गणानां पचतामेवाशासमानस्य विषमायुधस्य मार्गणतामुपगत मधुपसेवाकरमिति न दृष्टांततामर्हति । किंबहुना संध्यारागरंजितनभ स्थले बालचद्रचद्रिकापूर इव, पद्मरागघटितप्रदेशे स्फटिकमणिप्रभाप्रसर इव, समुल्लसत्पल्लवतल्लजप्रत्यग्रकुसमसुषमाप्रसर इव, विकचकोकनदे राजहसरुचिरिव कुकुमलिप्तप्रदेशे मलयजरस इव तस्य जिनबालस्याधरबिंबे स्मितच्छविराविरास ।

तन्मुखकांतिपयोधौ स्मितचद्रः स मुदाब्धिवृद्धिकरः ॥
पित्रोर्मन्मनवाणीपीयूषं चाविरास सुरसेव्यम् ॥ ३७ ॥

उत्तानशयनमुपगतस्य नरनाथनदनस्य मुष्टिद्वय केषांचिद्वदनसुधाकरकांतिसंक्रांतिमुकुलितबहुनालोदंचितकरकमलयुगलशकामन्येषां

---

१ अधिकतरगहसपक्षियुक्तपुष्पकलितं पक्षे मुद्रिकापादकटककर्णकुंडलयुक्तमिति ध्वनिः । २ याचकानां बाणाना च ।

च कर्मारिविजयसन्नद्धानियुद्धार्थमात्तमुष्टियुगमतिं, परेषां च वक्षःस्थ-
लविलसितमुक्ताहाररुचिसुरापगासंजातसुवर्णसरोजद्वयंसभावनां, इतरेषां
पुनर्देहकांतिकलशंवरुणालयतरुणविद्रुमवाल्लिकापल्लवतल्लजद्वद्वाभ्रिय च
संपादयामास ॥

इमं चुचुंब मुक्तिश्रीर्ध्रुवं रागात्कपोलयोः ॥
* तांबूलस्य रस. सक्तो यत्कुंडलरुचिच्छलात् ॥ ३८ ॥

इय खलु मेदिनी मामकीनपादस्पर्शादपापा निष्पकां च जायेत
चेत्कदा कथ सारसस्यसमृद्धिर्भवितेति मत्वा किल मत्पितुर्नाभिमही-
कांतस्य पत्नीत्वेन मम जननी मेदिनीति बुद्ध्येव मणिभूमिषु भूपति-
सुतश्चक्रमण जानुभ्यां चमदकुरुत ॥

स्खलत्पदं वभौ तस्य वचनं गमनं तथा ॥
आद्यं पुनर्मनोहारि परं नूपुरराजितं ॥ ३९ ॥
× प्रवेपमानाग्रपदं नृपात्मजश्चचाल देवीजनदत्तहस्तः ॥
नखप्रभाभिर्मणिकुट्टिमांगणे तन्वन्प्रसूनास्तरणस्य शंका।४०।
धूलिकेलीं ततानायं नालीकनिभलोचनः ॥
सुराधीशसुतैः साकं धरापालस्य नंदनः ॥ ४१ ॥

एव बाललीलामतिक्रांतः कौमारवयसि सुरकुमारैः परिवृतः

---

१ क्षीरसमुद्रः । २ जिनबालक । ३ अपगताः आपः जलानि यस्याः अपापा, पापरहिता च । ४ पापरहिता कर्दमरहिता च । ५ कमलस्य, पक्षिणो हंसस्य वा । ' सारस पकजे क्लीबं सारसः पक्षिचद्रयोः ' इति विश्वलोचनः । ६ सचारः । ७ स्खलितं पद, वर्णसमूहात्मक वचनं स्खल-त्पाद गमन च ।

* औत्सुक्यनुन्ना शिशुमप्यसंशय चुचुंब मुक्तिर्निभृत कपोलयोः ॥
माणिक्यताटककरापदेशतस्तथाहि तांबूलरसोऽत्र सगतः ॥
× क्रमेण सोऽय मणिकुट्टिमांगणे नखस्फुरत्कांतिझरीभिरंचिते ॥
स्खलत्पद कोमलपादपंकजक्रमं ततान प्रसवास्तृते यथा ॥

सहोत्पन्नमतिश्रुतावधिलोचनः सकलविद्यापारावारपारदृश्वा प्रत्यक्षीकृत-सकलवाङ्मयः पृथ्वीपतितनयः कदाचिद्व्यालोलमुक्ताकलापः कलितमधुरालापः, संगीतप्रसंगेन, कदाचिदारब्धकविपुंडरीकमंडलः काव्यप्रबंधरचनेन, कदाचित्काव्यसागरनौकासकाशच्छंदोविचेतिचारुतर-लक्षणप्रसरादिपरीक्षणेन, कदाचित्कवितावितानालंकारायमाणोपमाद्यलं-कारविवेचनेन, कदाचिदक्षरच्युतकमात्राच्युतकाबिंदुच्युतकाचित्रबंधवि-शेषादिशब्दालंकारकल्पनया, कदाचिन्मथानभूधरमथ्यमानपयःपारा-वारगर्भसमाविर्भूतलहरीपरंपरागर्वसर्वंकषवचनप्रपंचैः वावदूकैः समं वादकलया, कदाचिन्मधुरवाद्यगोष्ठीभिः, कदाचिद्वीणागोष्ठीभिः, कदा-चिच्छुकशिखंडिहंससारसक्रौंचकरिकलभमल्लाद्यनेकाकारविकृतामरकुमा-रपरिपाठनपटुनटनमृदुकूजितकेकारारोहणायोधनादिनानाविधविनोदैः,

कदाचित्समागतप्रकृतिजनरंजनवचनगुंफेन कदाचिदमराधिपप्र-हितसुरतरुप्रसूनविरचितसुरभिदामांबरभूषणः सुरभिलेपनो मेघकुमार-कल्पितधारागृहेषु जलकेलिविनोदेन, कदाचिन्नंदनवनसमाने क्रीडावने पवनामरमदमदवलनाविरजीकृते वनक्रीडाव्यापारेण कालं निनाय ॥

इत्यर्हद्दासकृतौ पुरुदेवचंपूप्रबंधे पंचमःस्तबकः ॥



## अथ षष्ठःस्तबकः।

क्षोणीकल्पतरोर्जिनस्य तदनु प्राज्यप्रभावश्रिय
छायां कांचनमंजुलां विदधतो नाकाधिपानंदिनी ॥
तारुण्यामलमंजरी सुमहिता हृष्यत्त्रिलोकीजन—
प्रोद्यन्नेत्रपरंपरामधुकरश्रेणी सदाऽतर्पयत् ॥ १ ॥

तदानीं निःस्वेदानिर्मलक्षीरगौरक्षतजसमचतुरस्रसंस्थानवज्रवृषभनागचसंहननसुरूपसुरभिस्वास्तिकनंद्यावर्त्याद्यष्टोत्तरशतलक्षणलक्षितमसूरिकाप्रभृतिनवशतव्यंजनराजितततप्ततपनीयानिकाशवर्णसपूर्णपरमौदारिकशरीरस्य शस्त्रपाषाणातपवर्षाविषाग्निकाष्ठकंटकत्रिदोषसंभवामयजरादिबाधाविदूरस्य मृदुमधुरगंभीरोदारप्रियहितामितवचनसारस्य चतुरुत्तराशीतिपूर्वलक्षोपलक्षितानपवर्त्यायुषः[1] सौंदर्यविजितमारस्य तस्य नाभिराजकुमारस्य सौंदर्यमहिमानमाकलयितुं को वा कविरीष्टे:—अथापि तदीयभक्तिरेव मां मुखरयति वनप्रियमिव वासंतलक्ष्मीः ॥

तरुषु स्थितमेव पुष्पवृंदं फलहेतुर्भुवने चिराय दृष्टं ॥
सुरभूजसुमं[2] जिनस्य मूर्ध्नि स्थितमासीत् सफलं विचित्रमेतत् ॥ २ ॥

संत्यक्तुं सकलंकतां मुखतया जातं निशानायकं ॥
दृष्ट्वा तद्वनिता निशा जिनपतेः केशात्मनाऽजायत ॥
दोषाख्यामपहातुमित्युपगताशंका विशंकामहे ॥
नो चेत्तत्र कथं नवोत्पलरुचिर्हृतोत्तमश्रीरपि ॥ ३ ॥

---

१ अपमृत्युरहितायुषः । २ कल्पतरुसुम ।

तस्य किल वदन प्रोढशोभिनक्षत्राधिप सकलमहीभृन्मस्तकसेव्य-मानपादं निखिलदिगंतेषु व्यवस्थापितकरं महितशोभनवसुधाधिपतिवि-ख्यात सवर्धितभुवनपतिं राजानमेव निजप्रौढिम्ना न जिगाय, वनवासिन कलितमहातपास्थितिं सदा परागरुचिशोभितं कुशेशयानिकर जिगायेति किं चित्रं ॥

भुवनत्रितयातिशायिशोभां स्फुटरेखात्रितयेन दर्शयंतं ॥
गलमस्य निरीक्ष्य हंत शंखस्त्रपया वारिनिधौ ममज्ज नूनं॥४॥
तस्य वक्षःस्थलं विभ्रो लक्ष्म्या निर्वृतिमंदिरं ॥
यत्र मुक्ता विराजंते सदा शुद्धाः स्फुरद्रुचः ॥ ५ ॥
परमहिमयुत तदीयवक्षस्थलमिच्छंति हिमालयं कवींद्राः ॥
तदुचितमुरुहारकांतिगंगा यदपतदत्र परीतपद्मरागा ॥ ६ ॥
मिथ्यात्वातपतप्तो धर्मगजो नाभिसरसि निममज्ज ॥
अस्यान्यथा कथ स्यान्मदधारा रोमराजिकपटेन ॥ ७ ॥

तस्य किल करसरोरुहनिरंतरनिर्मितदानप्रभावणे स्वर्णत्वमुपगता दीना न—दीना बभूवुरिति युज्यते, ते पुनर्लक्ष्मकुमाराः कथमासन्निति सवि-स्मयमास्महे ॥

---

१ प्रौढशोभ नक्षत्राधिप । प्रौढशोभन—क्षत्राधिप ।२ किरणः करभागश्च । ३ शोभ—नव—सुधापतिश्चंद्रः शोभन—वसुधाधिपतिः नृपः । ४ भूपतिं समुद्रं च। ५ जलमरणं च। ६ सूर्यातपः ध्यान च। ७ धूलिरिति ध्वनिः, पुष्परजांसि वा॥८ रेखात्रयेणेव जगत्रयाधिकां निरूपयंतं निजरूपसंपदम्॥ तत्कंठमालाक्ये ममज्ज लज्जया विशीर्यमाणः किल कंबुरम्बुधौ ॥ इति धर्मशर्माभ्युदये ९ सर्गे। ९ मोक्षस्थान, संतोषस्थान वा। १० शिद्धाः मुक्ताफलानि वा । ११ परम—हिमयुतं विपुलतुहिनयुत पक्षे पर—महिमयुत लोकोत्तरमाहात्म्ययुतं। १२ रत्नं, कमलं वा। १३ जल दानं वा॥१४काचनत्व जलं वा॥१५लक्ष्मयुक्ताः कुमाराः।

आस्थितो दशभवाञ्जिनचंद्रो निष्कलंकविदितो भवितेति ॥
नूनमिंदुरकरोद्दशभावांस्तस्य हस्तनखरूपमुपेत्य ॥ ८ ॥
सदाखंडलाभिख्यमाकीर्तिनेतं वलग्नं बलघ्नं वरस्यास्य विघ्नः
स्फुरद्रत्नकांचीसुवज्रायुधाढयं स्वराजत्वजुष्टं धनश्रीसमेतं॥९॥
तस्य खलु सक्थिदंडः करभकलभकरकदलिखडाश्च परस्पर समानाः
परतु ते कांतिकल्लोलैरुरवः अय तु मुख्यवर्णदैर्घ्यवशादूरुरिति विशेषः ॥

पादांगुष्ठनखांशुराजिकलितं जंघायुगं श्रीपतेः
हेमस्तंभशिखानिखातरजतश्रीशृंखलाशालिनीं ॥
डोलां हंत जहास हर्षविहरत्सद्धर्मलक्ष्म्यास्तथा ॥
कंदर्पद्विरदस्य बद्धनिगलामालानलीलां दधे ॥ १० ॥
इष्टार्थदानाद्वर्णाच्च सुरांगौ चरणौ विभोः ॥
अथापि पल्लव चित्रमधश्चक्रतुरुज्ज्वलं ॥ ११ ॥

तदनु नाभिराजनरपालतनयस्य यौवनारभमेवं विजृंभित समीक्ष्य वीतरागस्य विवाहप्रारभो दुर्घटः । एष किल हठान्मर्य्यादातीत इव मत्तदंतावलस्तपसे वन प्रविशेत् । तथापि काललब्धिरस्य प्रतिहारी समागमिष्यति तावत्पर्यंत लोकानुरोधेन पवित्रचरित्र कलत्रं परिणाययितुमुचितमिति संचिंत्य समासाद्य च समीपं देवस्य ससांत्वमेवमवोचत ॥

---

१ प्रशस्त इंद्रनामधेयं, सदासंपूर्णशोभ । २ नयन वक्त्र च । ३ मध्यप्रदेशः ' मध्यम चावलग्न चेत्यमरः ' । ४ इद्रं । प्रकाशितरत्नमयकांचीकलाप एव वज्रायुध । ५ स्वर्गप्रभुत्वेन युक्तं शोभनप्रकाशेन युक्त च ॥ ६ ' सक्थिक्लीबे पुमानूरुरित्यमरः ' ७ मणिबंधादाकनिष्ठं करस्य करभो बहिः ॥ ८ कल्पवृक्षौ शोभनारुणवर्णौ ॥

त्रिभुवनपते ! देव ! श्रीमन्स्त्वभूरासि हेतवः
तव वयमिहोत्पत्तौ पूर्वक्ष्माधरवद्रवेः ॥
इति दृढमथाप्यस्मद्वाणीं न लंघितुमर्हसि
त्रिदशविनुतो यस्मात्तस्माद्गुरूननुमन्यसे ॥ १२ ॥
मतिं विधेहि लोकस्य सर्ज्जन प्रति सम्प्रति ॥
तथाविधं त्वामालोक्य लोकोऽप्येवं प्रवर्ततां ॥ १३ ॥

तत सुरनिकरवंदितचरण! त्रिभुवनरमण ! धर्मवल्लिकामतल्लिका-बीजपरंपरायमाण ! प्रजासंततिसमुत्पत्तये काचन काचनवल्लीसरूपां सौंदर्यवैभवनिरस्तरतिमदाटोपा विधृतमणिकलापां त्रिजगति धन्या कन्या परिणेतुमर्हसीति ॥

अंगीचक्रे परमपुरुषः सस्मितस्तस्य वाचं ॥
दाक्षिण्याद्वा पितृविषयकात् किं प्रजानुग्रहाद्वा ॥
तस्य ज्ञात्वाभ्युपगममथो भूपतिर्वीतशंको ॥
हर्षाच्चक्रे परिणयविधिं देवराजानुमत्या ॥ १४ ॥
तन्व्यौ कच्छमहाकच्छजाम्यौ सौम्ये पतिंवरे ॥
यशस्वतीसुनंदाख्ये स एनं पर्यणीनयत् ॥ १५ ॥

तदानीं खलु साकेतपुरलक्ष्मीविलासमणिमुकुरायमाणे नूतनविता-नविततिविलंबिनानामणिगणघृणिपूरनिमग्नसुरनिकरे विविधवाद्यरवमु-खरितदिगंतरे परितः परिस्फुरन्मणिदीपप्रभाविसरे नवरत्नचयविनि-र्मितविवाहमंडपांतरे विलसमानमंगलद्रव्यसंगतशातकुंभमयपूर्णकुमलं-कृतमणिवेदिकामध्ये ताभ्यां कन्यामणिभ्यां पुरुदेव चंद्रिकाप्रसन्नताभ्यां

१ ' जामी स्वसृकुलस्त्रियोः ' इत्यमरः । २ द्विकर्मकोऽयं धातुः । ३ ज्योत्स्नानिर्मलताभ्या ।

गगनतल इव निशाकरो विरराज ॥

सौंदर्यस्य तरंगिण्यौ शृंगारांबुधिचांद्रिके ॥
तच्चित्तमत्तकरिणः शृंखले ते बभूवतुः ॥ १६ ॥
तयोः सौंदर्यसंपत्तिः स्वप्नबुद्धेरगोचरा ॥
गाहते सा कथंकारं गिरां पूरं कवीशिनां ॥ १७ ॥

ते खलु कन्यामतल्लिके गुरुतरभारारोपणमेव चांचल्यनिवारणधुरीणामिति कौतुकितचेतसा वेधसा नितंबभारपयोधरव्याजेन महीधरैः संयोज्य वनितारूपतया निर्मिते विद्युल्लते इव पुरुदेवसुरद्रुमस्य समीपे सधस्तनगुच्छकलिते कल्पलते इव च व्यराजतां ॥

अयममरपतीनां रत्नकोटीरकोटी—
घटितपदपयोजस्तत्र ताभ्यां प्रियाभ्यां ॥
सुचिरमधिकभोगान्प्राप्नुवानः प्रहर्षात्
क्षणमिव बहुकालं देवदेवः स निन्ये ॥ १८ ॥

अथ कदाचित्सौधतलविलसद्रत्नपर्यंके सुप्ता यशस्वतीमहादेवी स्वप्ने कविजनविदिता निजवदनस्य राजतां वसुधानुभवप्रदर्शनेन प्रकटयितुमिव परिग्रासग्रसनां मेदिनीं, कुचयुगमिव सरःस्थितिशोभितं, नितंबबिंबमिव मेखलाचितं समुन्नतं च सुराचलं, करमिव कमलसहचरं

---

१ ‘ मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः ’ ॥ इत्यमरः । २ मौलिः किरीटं कोटीरमुष्णीषं पुष्पदाम तु इति हैमः । ३ चद्रता पक्षे नृपत्व । ४ व—सुधानुभवः, वसुधानुभवश्च । ५ सरः सरोवर पक्षे हारश्च । ६ रशनायुत पक्षे कटकयुत च ‘काञ्च्या शैलनितंबे च खड्गबंधे च मेखला । इति विश्वलोचनः । ७ कमलमित्रं ।

प्रभाकर, कांचीकलापमिव सकलकैल निशाकरं, पदपद्ममिव सहंसकं सरोवर, बाहुयुगलमिव परमैकरांचित पयोनिधिं च विलोकयामास ॥

बंदिव्रातप्रकटितसुधासारधिकारगीतैः
वादित्राणां श्रुतिहतरवैः सा ततः संप्रबुद्धा ॥
उत्थाय द्रागमलशयनान्मगलस्नानपूता
भेजे स्वप्नप्रकाथितफल प्रष्टुकामा स्वकान्तं ॥ १९ ॥
तमुपेत्य सुखासीना तत्र सा भद्रविष्टरे
कांताय स्वप्नमालां तां कथयामास सुंदरी ॥२० ॥

तदनु, दिव्यामललोचनविलोकिततत्स्वप्नफलस्वभावोऽसौ देवः सुमेरुस्तनि ! सुमेरुदर्शनेन चक्रवर्तिन, कमलाक्षि ! कमलबंधुना प्रतापिन, चद्रमुखि ! चद्रेण कांतिसंपन्नं, सरोजगंधि ! सरोजदर्शनेन सरोरुहवासिन्या लक्ष्म्या समाक्रांतवक्ष.स्थल, महीधरश्रोणि ! महीप्रसनेन जलधिमेखलाया वसुमत्याः परिपालयितार, सागरगंभीरे ! सागरेण ससारसागरसंतरणनिपुण चरमांगामिक्ष्वाकुकुलवर्धन पुत्रशताग्रजं तनूजं परिप्राप्स्यसीति स्वप्नफलमित्थमचीकथत् ॥

इमां भर्तुर्वाच कुवलयदलाक्षी श्रुतिपुटे
वितन्वाना वेगात्प्रमदभरमासाद्य ववृधे
यथा वार्धेर्वेला प्रविलसति राकाहिमकरे
यथा वा समासे जलदसमये स्फारतटिनी ॥ २१ ॥
ततः सुबाहुप्रथितोऽहमिंद्रः सर्वार्थसिद्धिं समुपागतो यः ॥

१ कलकलः शब्दः पक्षे कलाभिः सहितः सकलकलः त। २ मरालयुत पक्ष नूपुरसहित च ३ परम—करांचित पक्षे पर—मकरांचित ।

विधेर्वशाद् व्याघ्रचरःसुरोऽयं समासदद्गर्भमरालकेश्याः।२२॥

एषा किल भुवनपतियोषा स्वस्या वचोविलासमिव सुरसार्थश्लाघ्यं, मध्यदेशमिव दिने दिने प्रवर्धमान, उदरभागमिव वलिभंगविरहितं, कुचयुगलमिव मलिनमंडलाग्रशोभां चक्रशोभां च प्रकटिकरिष्यमाणं, शरीरसन्निवेशमिव कोमलकलधौतरुचिं सुमित्रानदनमपि सुलक्ष्मणमपि भरताभिख्यां प्राप्स्यमान गर्भ बभार ॥

अतर्वत्न्या यशस्वत्या सुखं राजेति मन्महे ॥
बुभुजे वसुधां यस्मात्तारोल्लासं ततान यत् ॥ २३ ॥
ददर्शान्तर्वत्नीं धरणिपतिरानंदभरितः ॥
पयोगर्भां केकी सलिलधरराजीमिव नवां ॥
यथा तेजोगर्भां सुरपतिदिशं कोकतरुणो ॥
यथा शुक्तिं मुक्ताफललिततगर्भामिव वणिक् ॥२४॥

ततश्च सा च यशस्वती देवी त्रिभुवनपतिना सह लीलाभवनोपवनकृतकाचलेष्विव विजयार्धहिमवदचलकूटेषु, निजगृहोद्यानक्रीडासरोवरेष्विव गंगाजललवणाबुधिवेलावनसरसीसलिलेषु, विलासमंदिरपरिसरनंदनवनलतानिकेतन इव पार्टीरगिरिशिखरकोटीविलसितचंदन-

१ सुराणा देवाना सार्थः समूहः तेन श्लाघ्य पक्षे सुरसैः शृंगारादिरसैः श्लाघ्य । २ त्रिवलितरंगराहित पक्षे बलवत्पुरुषनाशराहित बवयोरभेदाद्वलिबलिः इति भवति ॥ ३ मंडलाग्र खड्गः मडलाग्र स्तनमडलचूचुक च । ४ चक्रमिति शस्त्रविशेषः चक्रवाकश्च । ५ सुमित्रादेव्याः पुत्रमपि लक्ष्मण इति नामधेययुक्तमपि भरतइति नामधेय गतवानिति विरोधः । तत्परिहारः—मित्रजनतोषकरमपि शोभनहलकुलिशादिसमुद्रिकलक्षणयुक्तमपि भरताभिख्या लप्स्यमान ॥ ६ गर्भिणी । ' अन्तर्वत्नी गर्भिणीस्याद्गर्भवत्युदरिण्यपि ' ॥ इति हैमः ।

वाटीसंनिवेशे विहरमाणा, भिषक्परिषत्संपादितकल्याणामृताहारमिव षट्खडक्षेत्रमृत्तिकां सेवमाना, सेवाभिज्ञवारांगनाशृंगारसुधासिक्तसूक्तिसरणिमिव समरालापसमुद्भटवीरभटघटापटुतरकथां शृण्वती मृदुमधुरविदग्धमुग्धपरिहासमनोहरालापशुकसारिकावालिमिव पंजरगतकुंजराराातिकिशोरपरंपरां पश्यंती कानिचिद्दिनानि निनाय ॥

शाणोल्लीढे कृपाणे मणिमुकुर इव स्वाननं साध्वपश्यत् ॥
वीणागानं मनोज्ञं मधुरमिव मुदा साऽशृणोच्चापशब्दं ॥
चित्ते चक्रे चिराय प्रथमरसमिव प्रौढवीराद्भुतादीन् ॥
एषा त्रस्तैकवर्षस्थितहरिणशिशुप्रोल्लसल्लोलनेत्रा ॥ २५ ॥

तदनु चक्रधरोदयनिदानतया भृशमनवमेऽपि नवमे मासि सैषा लक्ष्मीनिर्विशेषा त्रिभुवनपतियोषा हरिहयहरिदिव पूर्वमहीभृन्मनोहराकारा विमलशोभनक्षत्राधिपोदयहेतुश्च यशस्वती देवी, भास्वतमिव सच्चक्रानंदं कंदलयत कमलाधिकपरिपोषं परिस्फुरत्तेजःपरिवेष चामगुरुशुभंयुगुणसंपन्ने मुहूर्ते दुरुदुराव्हये योगे मनुकुलकलशजलधिकलानिधिसमुदितनय तनय जनयामास ॥

अजायत भुजाश्लिष्टवसुधो यदयं सुतः ॥
ततोऽस्य सार्वभौमत्वं तदा नैमित्तिका जगुः ॥ २६ ॥

---

१ अनवमेपि नवमे इति विरोधः । तत्परिहारश्चाय—न अवमः अनवमः उत्कृष्ट इत्यर्थः।२ हरिहयहरित् । इंद्रिदक् पूर्वदिगित्यर्थः।"हरिहयः स्वाराण्नमुचिसूदनः" इत्यमरः । दिशस्तु ककुभः काष्ठाः आशाश्च हरितश्च ताः। इत्यमरः । ३ उदयपर्वतः पूर्वराजश्च नाभेयनृपः। ४ निर्मलशोभा नक्षत्राधिपदिशा । निर्मलप्रकाशितक्षत्राधिपोदयहेतुः । ५ क्षीरजलधिः ।

सुतेंदुमासाद्य कलानिवास समेधयतं कुमुदं चिराय
श्यामा चकाशे सुदती त्रियामा सा पापचक्रव्यथनैकहेतुः।२७

स किल जिनराजः पद्माकर इव सर्वतोमुखसमृद्धिसंपन्नः समुन्निद्रशोभनतामरसहितः सदामरालिसेव्यमानः भ्रमराहितश्च पद्मचधुनेव प्रौढशोभनखोज्ज्वलपादेन साधुचक्रसंतोषदायिना उदयमुपेयुषा कुमारेण भृशमुल्लास ॥

पितामहौ च तस्यामू प्रमोद परमापतुः ॥
यथा सवेलो जलधिरुदये शीतरोचिषः ॥ २८ ॥

पुण्याशीर्वचनारवैर्मृगदृशां भूपालगेहांतरे
सानंदं प्रहतानकध्वनिभरैर्वादित्रघोषैस्तथा ॥
लेखोन्मुक्तसुमावलीमनुपतल्लोलंबकोलाहलैः
शब्दैकार्णवमग्नमेतदभवद्व्यालोललोकत्रयं ॥ २९ ॥

मंदारवनविहारी मंदं मंदं चचार पवमानः ॥
ककुभां जेता जात इति भीत इव प्रतीतादिक्पालः॥३०॥

तदानीं सरभससंचरत्परिजननिकरसक्षोभसचलितमहीतला, प्रतिनिकेतन समुदस्तकेतनपटसंजातमंजुपवनसमानीतकल्पतरुकुसुमोपहारा, गंगातरंगशीकरनिकरद्विगुणितशैत्यसौरभ्यमृगमदजलच्छटासंसिक्तमधुकरनिकर-झंकारमनोहारिकुसुमोपहारमंडितरथ्यागणा, महीपतिनिवेदनसंभ्रमसंचर-

१ कैरव पक्षे भूमिजनसंतोषकः। २ शोभन—तामरस—हितः पक्षे शोभन—नतामर—सहितः । ३ सदा—अमरालि सदा मरालि। ४ भ्रमर—हितः भ्रम—रहितः । ५ प्रौढशोभ—नखोज्ज्वलपादेन पक्षे प्रौढशोभन—खोज्ज्वल—पादेन ॥ प्रौढशोभनाकाशोज्ज्वलकिरणवता इत्यर्थः सूर्य पक्षे ।

द्धद्धकंचुकीनिकरपुरःसरपरिवारजनानिर्दयसंमर्द्दनिपतितकुब्जवामनवर्षधरनिकुरुंबा लंबमानकुर्चविंबविस्रस्तांतरीयवृद्धधात्रीजनपरिकलितनर्तननिरीक्षणजनितपुरजनहास्यरसा, युगपत्तरंगितमंगलसंगीतसंगतानेकगानकलयानुगतलीलालास्यप्रसक्तकामिनीजनकमनीया साकेतपुरी वेलातीतपौरजनप्रमोदा अजायत ॥

तदानीं क्षोणीशे वितरति बहूनर्थनिवहान् ॥
सुरद्रुव्यूहो द्रागहह दिवि पंचत्वमभजत ॥
तथा चिंताश्मत्व सुरमणिरवाप प्रकृतितो
जगाहे स्वर्धेनुः सपदि शतमन्युं दृढतरं ॥ ३१ ॥

तदनु नाभिराजकच्छमहाकच्छभूपालाः संमिलितास्तस्य कुमारस्य जातकर्मोत्सवं विधाय, निधाय च निजांके भाविसकलभरताधिपस्यास्य भरत इति नामधेयं प्रकटयामासुः ॥

तन्नाम्ना भारतं वर्षमितीहासीज्जनास्पदं ॥
हिमाद्रेरासमुद्राच्च क्षेत्रं चक्रभृतामिदं ॥ ३२ ॥
पुत्रोऽयं तनुकांतिनिर्मलजलः श्रीकुंतलालिव्रज—
व्याप्तः पादकरास्यशोणकमलो बाहामृणालद्युतिः ॥
राज्यश्रीहृदयंगमप्रविलसत्संवासपद्माकरः ॥
सामोदः समभूच्चिरं मनुकुलक्षीराब्धिमध्ये ध्रुवम् ॥ ३३ ॥

स किल भरतकुमारो बंधुजनकरकमलविहारकेलिकलहंसः सकलगुरुजननयनेंदीवरानंदशरच्चंद्रः सुंदरमन्मनहासितमन्मनालापलसितमणि-

१ मरणत्व, पंचसंख्यात्व च । २ चिंतया पाषाणत्व चिंतामणित्वं च । ३ यतद्दुःखत्व, इंद्रं च । "मन्युर्दैन्ये क्रतौ क्रोधे वासवे तु शतात्परः' इति विश्वलोचनः ।

कुट्टिमचंक्रमणादिभिः पित्रोरानंदं कदलयामास ॥

कंठे मंजुलकुंजरारिनखरन्याबद्धमुक्तामणी—
माला धैर्यगुणश्रियः प्रविचलद्दोलायमानां दधत् ॥
विक्रीडन् क्षितिपालबालककुलैर्न्यालोलसत्कुंडलः ॥
सानंदं पुरुनदनो मनुकुलप्राच्याचलाहस्करः[1] ॥३४॥

तदनु मनुकुलतिलकोऽयं बालको लोकयात्रावर्तनतत्परेण पुरुपरमेश्वरेण परिकलितान्नप्राशनचौलोपनयादिक्रमः, सवयोभिर्नरेंद्रनंदनैः सह प्रकटितपांसुविहार., कुरगमदकर्दमसपादितरेखामडितगडमडलः, कुंकुमपासुपटलसाद्रसिंदूरितमस्तकः, कदाचिन्मदांधसिंधुरमारुह्य सहर्षमधिरूढौपवाह्यैरन्यैर्वयस्यैः सह प्रमदवन प्रति प्रतिष्ठमानः, कुचिताग्रतर्जनीनिशिताकुशः प्रविश्य च तद्वन तत्र विचित्रकृतकाचलतुंगतमशृंगेषु व्यापारिततद्गजः. कोमलकदलीकाननेषु संभ्रमसमुत्पाटितरमातरुगुंमं कुंभीन्द्र संचारयन्, गंभीरतरविमलदीर्घिकासलिलेषु संप्लावयन्, विकचकमलकुलशोभितकमलाकरे सगेजवननिर्मूलनप्रचडशुंडादडशुंडालमखंड सक्रीडयन्, उद्दडपुडरीकषडप्रकल्पितधवलातपत्रशुभ्रतरादभ्रमृदुलतन्तुसतानदतुरितचामरानिकरः, समुल्लसदशोकपल्लवपरिकल्पितविजयवैजयंतीविसरः, पठनपटुबालकबादिसदोहजयजयानदकोलाहलमुखरितादिगतर· नृपभवनमवजगाहे,॥

शरीरवल्लीकुसुमायमानं तारुण्यमेतस्य ततो जजृंभे ॥
सौंदर्यलक्ष्मीविनिवासभूमेः सुवर्णखंडस्य यथा सुगंधः ॥३५॥
पितुर्यादृक् तादृक् ललितगमनं सैव च तनुः ॥

---

१ मनुकुलोदयाद्रिदिनमणिः ।

**कला लीला सैव स्मितमपि तदेव द्युतिरपि ॥**
**वचः शीलं तद्वन्मधुरमिति सर्वेऽपि सुगुणाः ॥**
**तथैव प्रोद्भूताः न तु गुणविशेषो व्यलसत ॥ ३६ ॥**

अथ खलु मनुकुलपूर्वाचलद्युमणिर्भूपालतनयचूडामणिर्मदन इति मानिनीभिः, सुरतरुरिति वनीपकजनैर्वैवस्वत इति विद्वेषिगणैः, कलासदनमिति कोविदैर्गंधर्व इति गायकैः, स्नेह इति धनैः, अनाश्रयणीय इति दोषैः, दुर्ग्रहचित्तवृत्तिरिति चित्तभुवा, स्त्रीपर इति सरस्वत्या, जनक इति कीर्त्या, पतिरिति लक्ष्म्या, षंढ इति परकलत्रैर्जगत्पालक इति प्रजाभिरगृह्यत ॥

**मनुकुलवारिजादिनकर भरतगुणाब्धिर्हि कुशलिमंकरोऽयं ॥**
**नक्रंदयते कमपि च तद्युक्तं भंगरहित इति चित्रं ॥३७॥**
**नरजन्या लसमानो नखोज्ज्वलोऽयं तथापि भरत इति ॥**
**राजेति च प्रसिद्धिं गत इति चित्तेऽपि नृत्यति विचित्रं ॥३८॥**

तदनु यः किल वज्रजंघभवे पुरोहितानंदनस्ततोऽधोग्रैवेयकाहमिंद्रपीठः सर्वार्थसिद्धाहमिंद्रश्च बभूव स खलु यशस्वत्या वृषभसेननाम तनूजोऽजायत ॥

---

१ यमः २ कुशलिम—करः क्षेमंकर इत्यर्थः । कुशलि—मकरः ३ नक्र दयते मकरजंतु पालयति पक्षे न क्रंदयते न दुःखयति इति भावः ।४ भंगः कल्लोलः विनाशश्च ।' भंगस्तरंगरुग्भेदे दभे जय विपर्यये इति विश्वलोचनः।५ नरजन्या मनुष्यजन्मना 'जनिरुत्पत्तिरुद्भवः' इत्यमरः पक्षे न रजन्या लसमानः। निशया शोभमानो न ।६ नखोज्ज्वलः नखैरुज्ज्वलः । पक्षे न खोज्ज्वलः नभसि न उज्ज्वलः इति भावः । ७ भरतः भेषु नक्षत्रेषु रतः आसक्तः । भरत इति—नाम्ना युक्तः । ८ राजा नृपतिश्चंद्रश्च ॥

श्रेष्ठी धनमित्रोप्यधोग्रैवेयकाहमिंद्रो महापीठः सर्वार्थसिद्धाहमिंद्रश्च सोयमधुनानंतविजयो नाम तनयो बभूव ॥

शार्दूलार्यश्च चित्रांगददेवो वरदत्तनृपोऽच्युतसामानिको विजयनृपश्च भूत्वा सर्वार्थसिद्ध्यहमिंद्र सोयमनंतवीर्यो नाम तनयोऽजायत ॥

वराहार्यश्च मणिकुंडलामरो वरसेनभूपालोऽच्युतसामानिको वैजयंतनृपश्च भूत्वा सर्वार्थसिद्ध्यहमिंद्रः सोऽयमच्युतनाम सूनुरजायत ॥

वानरार्यश्च मनोहरादिविजश्चित्रांगदभूपालोऽच्युतसामानिको जयंतमहीपतिश्च भूत्वा सर्वार्थसिद्धौ सजातोऽहमिंद्रो वीरनामा तनूभवो बभूव ।

नकुलार्यश्च मनोरथदिविजः शांतमदनमहीकांतोऽच्युतसामानिकोऽपराजितनृपश्च भूत्वा सर्वार्थसिद्धौ सजातोऽहमिंद्रो वरवीराभिधानः सूनुः समजायत ॥

इत्येकोनशतं पुत्रा यशस्वत्या जिनेश्वरात् ॥
भरतस्यानुजन्मानो बभूवुश्चरमांगकाः ॥३९॥

ब्राह्मीं तनूजामतिसुंदरांगीं । ब्रह्माथ तस्यामुदपादयत्सः ॥
कलानिधेःपूर्णकलां मनोज्ञां । प्राच्यां दिशायामिव शुक्लपक्षः ४०

पूर्वोक्तवज्रजंघसेनानायकोऽकंपनश्चाधोग्रैवेयकाहमिंद्रो महाबाहुमहीपतिश्च भूत्वा सर्वार्थसिद्धौ सजातोऽहमिंद्रो मृगेंद्र इव कंदरागर्भं सुनंदागर्भमाविवेश ॥

व्यपगतवलिभंग संप्रवृद्ध मृगाक्ष्याः ।
सुभगमुदरदेशं वीक्ष्य सद्वृत्तरूपौ ॥
वत सुरुचिरमुक्तोद्भूतशोभां दधाना—।
वपि मलिनमुखत्व प्रापतुद्रागुरोजौ ॥४१॥

सा किल विशालाक्षी दिशावशावल्लभसकाशकरेणुराजकालितम-मराविलोकनविलासमतिकौतुकेन विलोकमाना नानाविधमल्लजननियुद्ध-केलिकथामेव शुश्रूषती क्रमेण नवमासेषु अतीतेषु बाहुबलिसमाव्हयं तनयं जनयामास ॥

विनृत्यद्वारस्त्रीचरणविरणन्नूपुररवै
स्तथा भेरीध्वानैः पटुदलितदिग्भित्तिपटलैः ॥
परीतं साकेत पुरमभवदुच्चोरणकुलं ॥
समुद्भूते पुत्रे विमलपटकेतुप्रघटितम् ॥ ४२ ॥
वज्रजंघभवे यास्य भगिन्यासीदनुंदरी ॥
सा सुंदरीत्यभूत्पुत्री वृषभस्यातिसुदरी ॥ ४३ ॥
स्वर्णस्फुरत्सरोजाश्रियं वितन्वतमुदितंमभ्रामितं ॥
रविमिव विभया प्राची पुत्रं पुत्र्या सहाभजत्सैषा ॥४४॥
तत्कालकामदेवं तारुण्यश्रीमनोहराकारं ॥
को वर्णयितुं शक्तो भुजबलिनं तं त्रिलोकरमणीयं ॥४५॥

यस्य च चंचरीकसंचयधिक्कारिणी कुंतलराजी, राजीवसुहृद्वदन-प्रभा, प्रभाकरनिभकुंडलर्महो, महोत्पलच्छाविर्नयनलक्ष्मीः, लक्ष्मीनिकेतनं वक्षोवलय, वलयाविलासित करयुगलं, गलविलसिता मुक्तावली, वालित्रय-भासुरं सुभगोदर, दरहसिततुलितमिंदुबिंब, बिंबसहोदरमधरपल्लव, पल्ल-वकोमल पादयुगं, युगायतो भुजाविलासो, विलासवतीमनोहरा तनुलते-ति ॥

१ गजराजः २ सुवर्णनिर्मितविकसितकमलकांतिं । पक्षे जले प्रकाशित-तकमलशोभा ।३ आकाशगत, भ्रान्तिरहितं च ।४ कान्त्या । ५ महस्तेजः।

यस्य च बलोद्दंडो भुजदंडः पराक्रमलक्ष्मीपर्यंक इव, राज्यलक्ष्म्या उपधानखंड इव, प्रकृतिजनानामालम्बन दंड इव, शत्रुबलजलधेर्मंथानदण्ड इव, कीर्तिलक्ष्म्याः केतुदण्ड इव, जयश्रीलतायाः उपघ्नदंड इव च व्यराजत॥

धातुः शिल्पादिरम्यप्रकटनातिलकस्थानमेनं सुरूपं।
य दृष्ट्वा सारसाक्ष्यो रजनिकरशिलापुत्तिकावद्द्रुताः स्युः॥
शत्रुक्षोणीधुरीणा जगति सुविदिता ये तुसंग्रामसिंहाः॥
ते सर्वे ग्रामसिंहाःसपदि समभवन्सपद संत्यजंतः ॥४६॥

एकोत्तरं शतमिमे मधुराः कुमाराः
कांत्या गुणेन विभवेन च तुल्यरूपाः॥
ते यौवनेन भरतप्रमुखा विरेजुर्वन्या
मनोहरमदेन यथा द्विपेन्द्राः ॥ ४७ ॥

भूपा रत्नमणीघृणिप्रसरणव्याप्ताखिलाशांतराः॥
कांत्या कोमलया जितासमशराः कारुण्यवारांकराः॥
गांभीर्येण पयोनिधिं स्थिरतया भूमिं महिम्ना कुल—
क्षोणीध्रानन्नुकुर्वते स्म त इमे दानेन कल्पद्रुमान् ॥४८॥
इत्यर्हद्दासकृतौ पुरुदेवचंपूप्रबंधे षष्ठः स्तवकः॥

---

१ श्वानः। २ जितमदनाः। ३ दयाजलधयः। ४ पर्वतान्।

स्पृष्ट्वा कराभ्यां मुहुरुत्सुकोऽयं लोकेश्वरो मूर्धनि जिघ्राति स्म॥२॥

तदनु तयोर्विनयशीलादिक विलोक्य जगद्गुरुर्विद्यास्वीकारणकालोऽयं इति मत्वा ब्राह्मीसुंदरीभ्यां सिद्धमातृकोपदेशपुरःसर गणितं स्वयंभुवाभिधानानि पदविद्याछंदोविचित्यलंकारशास्त्राणि च अर्थशास्त्र भरतशास्त्रे भरताय वृषभसेनाय गांधर्वं, अनताविजयाय चित्रकलाशास्त्रं वास्तुविद्या च, भुजबलितनयाय कामतंत्रसामुद्रिकायुर्वेदधनुर्वेदहस्त्यश्वतंत्ररत्नपरीक्षादीनि, अन्येभ्यश्च यथोचित लोकोपकारकशास्त्राण्युपदिदेश ॥

सुतैरधीतानिःशेषविद्यैरद्युतदीशिता ॥
किरणैरिव तिग्मांशुरासादितशरद्युतिः ॥ ३ ॥
पुत्रैःकलत्रैश्च महापवित्रैर्वृतस्य नित्य वृषभेश्वरस्य ॥
कालो व्यतीयाय महान् क्रमेण मनोहरैर्मंगलदिव्यभोगैः॥४॥

अत्रांतरे कालवैभवकृतेन महौषधिदीप्तौषधिप्रमुखसर्वौषधिशक्तिप्रक्षयेण नरनिकररक्षणविचक्षणानामकृष्टपच्यानां सस्यानां विरलीभावेन लोकोत्तरपादपाना रसवीर्यविपाकप्रहाणेन जीवनशकातककलंकितमनोवृत्तयः प्रकृतयो नाभिराजाज्ञया सनातन पुरुषमासाद्य सविनयमेवं विज्ञापयामासुः ॥

त्रिभुवनपते! श्रीमन्! स्वामिन्! दयागुणशेवधे! ॥
वयमतिभयाद्युष्मत्पादांबुजं शरणं गताः ॥
तदुचिततमां वृत्तिं व्यावेद्य रक्ष भवत्प्रजाः ॥
तरुततिरियं नष्टा सस्यानि नैव फलन्ति च ॥ ५ ॥
पिपासा क्षुद्बाधा तरलयति चित्तं प्रतिदिनं ॥

निराहाराणां नस्त्रिभुवनपते ! त्राहि दयया ॥
तथा जाता बाधा घनपवनवर्षातपमुखैः ॥
निराधारानस्मान्निरवधि दुनोत्याकुलयाति ॥६॥
ततोऽस्माकं यथाद्य स्याज्जीविका निरुपद्रवा ॥
तथोपदेष्टुमुद्योग कुरु देव ! प्रसीद नः ॥ ७ ॥

इति प्रजाना विज्ञापनशैलीं निशम्य विशालतरकरुणास्त्रिभुवनरमणः पूर्वापरविदेहेष्विव ग्रामारामनगरादीनि च षट्कर्माणि प्रकृतीविततिजीवनाय व्यवस्थापनीयानि इति निश्चित्य समाश्वास्य च मुहुःप्रजानिकर मा भैष्टेति गिरा सुराधिपस्य सस्मार। अथ तदनुध्यानमात्रेणागतः सकलसुरनिकरपरिवृत. वृत्राहितस्तत्पादपकजं निजमुकुटमणिमरीचिमजर्या पिंजरीकुर्वाणस्तदाज्ञावशेन शुभे मुहूर्ते तस्यायोध्यापुरस्य मध्ये महादिक्षु च रुचिविजितसुरमंदिराणि जिनमंदिराणि निर्माय देवमातृका साधारणानूपजांगलमेदानन्तपालपालितदुर्गपरिवृतान्लुब्धकारण्यचर

पुलिंदशबरादिपरीक्षितातरालप्रदेशान्, काशीकौसलकालिंगवगकरहाटककर्नाटचोलकेरलमालवमहाराष्ट्रसौराष्ट्रवनपासिद्राचिरांध्रकाभोजबाल्हिकतुरुष्ककेदारसौवीरभोरचेरकेकयशूरसेनापरातिकाविदेहासिंधु--गंधारकुरुजांगलविदर्भवत्सावतीवनभेदपल्लवदशार्णकच्छमहाकच्छ——मगधरम्यकाश्मीरकुरुसौभद्रकादिविविधविषयान् तज्जनपदमध्यभागेषु परिखावप्रपाकारगोपुराट्टालकालकृतानि नानाविधनगराणि च ग्रामपुरखेटकर्वटादिकं च परिकल्पयामास ॥

पुराणि परिकल्पयन्नमुचिसूदनः सार्थकं

१ वृद्धयंत्रुपालितो देशः । २ जलप्रायमनूप स्यात् ॥३ निर्वारिदेशो जांगलः



## सप्तमः स्तवकः ।

अथ जातुचिदमरकुमारकरपल्लवानिर्लोलचामरविधूननजनितमदगंधवहांदोलितविमलदुकूलांचलः, त्रिदशवंदिसंदोहसंस्तूयमानगर्भावतरणजन्माभिषवणप्रमुखनिसर्गमहिमाकर्णनसमुदीर्णलज्जया किंचिदवनतवदनसरोरुहः, सततसमवनतदिविजमनुजविद्याधरव्रजमुकुटतटघटितमणिमरीचिपुंजपिंजरितोत्तुंगसिंहासनमलंकुर्वाणो वृषभेश्वरः सकलहृद्यतमविद्योपदेशाय मतिं व्यापारयामास ॥

उद्भिन्नस्तनकुड्मले मृदुरणत्कांचीकलापांचिते ॥
सिंजन्मंजुलनूपुरेद्धचरणन्यासे चकोरेक्षणे ॥
कांतिं कांचनरेणुराजिसदृशीमंगैः किरंत्यौ पुरो ॥
ब्राह्मी संसदि सुंदरी च त इमे प्राप्ते समीपं गुरोः ॥ १ ॥

ते किल बाल्यादनंतरे वयसि वर्तमाने विहारसदने मेधाविलासिन्याश्चंद्रिके विनयाम्बुधेः, कुलसदने शीलसंपदां, सीमाभूते सौंदर्यस्य, सकलमानवतीजननर्वनपात्रे मृदुकोमलपादविन्यासेन पुरतःप्रकीर्णरक्तांबुजोपहारश्रियं व्यातन्वाने, नखमणिदर्पणसंक्रांतनिजतनुलताच्छायाच्छलेन रूपसंपदा विनिर्जितं पादमुपाश्रितं दिक्कुमारीनिकरमिव दर्शयन्त्यौ, मदनसदनाग्रभागप्रसरद्धूपधूमरेखामिव नाभिनिपानावतरणार्थमिंद्रनीलमणिखचितसोपानपरंपरामिव, अगाधतरनाभिकूपखनन-

---

१ श्रीवृषभेश्वरस्य निजजनकस्य । २ नवनं स्तुतिः । ३ कूपः ।

श्रांतेन वेधसा तन्निकटे क्षिप्तां खननशलाकामिव रोमराजिलतां बिभ्राणे, सद्भूपतिसभासन्निवेशामिव, सुमनोजनवादरणस्थानमिव, पद्माकरमिव सद्यस्तनकुड्मलशोभितं, सुरेंद्रनदनवनमिव सुरतरुचिरलीलास्पदं मंजुलकुचोज्ज्वल च, मुक्तिप्रदेशमिव मुक्ताधिकशोभाचित वक्षस्थलं दधाने, पूर्वाचलमिवारुणबिंबप्रकाशं, मरुमार्गमिव विद्रुमच्छाय, बंधुजीवप्रणाहरमपि अधिकारुण्य वहतं, सुरागमप्यधरमुद्वहन्त्यौ, कंदर्पजैत्राख्र इव नेत्रे पुरो व्यापारयन्त्यौ, लोलालकप्रतिबिंबसगताभ्या कपोलाभ्या सकलकस्य सुधाकरस्य लक्ष्मीं व्हेपयन्त्यौ, चिकुरनिकर रुचिरेण वदनेन शैवलपटलपरिवृत पफुल्यमानपयोजं प्रावृषेण्यपयोवाहव्यूहविराजित राकासुधाकर च तुलयन्त्यौ, मालाजालकलितेन कबरीभरेण गगातरगसगत कालिंदीप्रवाह स्मारयन्त्यौ ब्राह्मीसुंदर्यौ सप्रश्रयं समीपमुपाश्रित्य जगन्नाथ नमश्चक्रतुः ॥

**उत्थाप्य वेगात्प्रणते सुते ते स्वांकं समारोप्य च कौतुकेन ॥**

---

१ अयःशलाका (पहार इति महाराष्ट्रभाषाया) २ सुमनोजन—वादरणस्थानं विद्वज्जनवादयुद्धस्थल । पक्षे सुमनोज—नवादरण—स्थान मदनप्रीतिकरस्थानं । ३ तत्कालीनकलिकाशोभित पक्षे नवोद्भिन्नकुचविराजित । ४ सुरतरु—चिरलीलास्पद । पक्षे सुरत—रुचिरलीलास्पद । कल्पवृक्षलीलास्थान रतिमनोहरक्रीडास्थान चेति भावः । ५ मजुल—कुचोज्ज्वल, मंजु—लकुचोज्ज्वल । मनोहरस्तनोज्ज्वल, मनोज्ञडहुवृक्षोज्ज्वल च 'लकुचो-लिकुचो डहुः' इत्यमरः ॥ ६ मुक्ताफलाधिकशोभायुक्त सिद्धजीवशोभाचित च ॥ ७ विगतद्रुमच्छाय विद्रुममणिच्छाय च ॥ ८ बधुजनप्राणनाशनमपि अधिकक्कारुण्य इति विरोधः । पुष्पविशेषकातिहरणमपि अधिक अरुण । ९ सुरागमप्यधरं इति विरोधः सुष्ठु आरक्त अधरोष्ठ ॥

स्पृष्ट्वा कराभ्यां मुहुरुत्सुकोऽयं लोकेश्वरो मूर्धनि जिघ्रति स्म।२।

तदनु तयोर्विनयशीलादिकं विलोक्य जगद्गुरुर्विद्यास्वीकारणकालोऽयं इति मत्वा ब्राह्मीसुंदरीभ्यां सिद्धमातृकोपदेशपुरःसरं गणितं स्वयंभुवाभिधानानि पदविद्याछंदोविचित्यलंकारशास्त्राणि च अर्थशास्त्रं भरतशास्त्रं भरताय वृषभसेनाय गांधर्वं, अनंतविजयाय चित्रकलाशास्त्रं वास्तुविद्या च, भुजबलितनयाय कामतन्त्रसामुद्रिकायुर्वेदधनुर्वेदहस्त्यश्वतंत्ररत्नपरीक्षादीनि, अन्येभ्यश्च यथोचितं लोकोपकारकशास्त्राण्युपदिदेश ॥

सुतैरधीतानिःशेषविद्यैरद्युतदीशिता ॥
किरणैरिव तिग्मांशुरासादितशरद्युतिः ॥ ३ ॥
पुत्रैःकलत्रैश्च महापवित्रैर्वृतस्य नित्यं वृषभेश्वरस्य ॥
कालो व्यतीयाय महान् क्रमेण मनोहरैर्मंगलदिव्यभोगैः॥४॥

अत्रांतरे कालवैभवकृतेन महौषधिदीप्तौषधिप्रमुखसर्वौषधिशक्तिप्रक्षयेण नरनिकररक्षणविचक्षणानामकृष्टपच्यानां सस्यानां विरलीभावेन लोकोत्तरपादपानां रसवीर्यविपाकप्रहाणेन जीवनशंकातंककलंकितमनोवृत्तयः प्रकृतयो नाभिराजाज्ञया सनातनं पुरुषमासाद्य साविनयमेवं विज्ञापयामासुः ॥

त्रिभुवनपते! श्रीमन्! स्वामिन्! दयागुणशेवधे! ॥
वयमतिभयाद्युष्मत्पादांबुजं शरणं गताः ॥
तदुचिततमां वृत्तिं व्यावेद्य रक्ष भवत्प्रजाः ॥
तरुततिरियं नष्टा सस्यानि नैव फलन्ति च ॥ ५ ॥
पिपासा क्षुद्बाधा तरलयति चित्तं प्रतिदिनं ॥

निराहाराणां नस्त्रिभुवनपते ! त्राहि दयया ॥
तथा जाता बाधा घनपवनवर्षातपमुखैः ॥
निराधारानस्मान्निरवधि दुनोत्याकुलयति ॥६॥
ततोऽस्माकं यथाद्य स्याज्जीविका निरुपद्रवा ॥
तथोपदेष्टुमुद्योग कुरु देव ! प्रसीद नः ॥ ७ ॥

इति प्रजाना विज्ञापनशैली निशम्य विशालतरकरुणस्त्रिभुवनरमण. पूर्वापरविदेहेष्विव ग्रामारामनगरादीनि च षट्कर्माणि प्रकृतीवितति-जीवनाय व्यवस्थापनीयानि इति निश्चित्य समाश्वास्य च मुहु.प्रजा निकर मा भैष्टेति गिरा सुराधिपस्य सस्मार। अथ तदनुध्यानमात्रेणागतः सकलसुरनिकरपरिवृतः वृत्राहितस्तत्पादपकजं निजमुकुटमणिमरीचि मजर्या पिंजरीकुर्वाणस्तदाज्ञावशेन शुभे मुहूर्ते तस्यायोध्यापुरस्य मध्ये महादिक्षु च रुचिविजितसुरमदिराणि जिनमदिराणि निर्माय देवमातृका साधारणानूपजांगलभेदानन्तपालपालितदुर्गपरिवृतान्लुब्धकारण्यचर

पुलिंदशबरादिपरीक्षितातरालप्रदेशान्, काशीकौसलकालिंगवग-करहाटककर्नाटचोलकेरलमालवमहाराष्ट्रसौराष्ट्रवनपासिद्राचिराध्रकांभो-जबाल्हिकतुरुष्ककेदारसौवीरभोरचेरकेकयशूरसेनापरातिकाविदेहासिंधु--गंधारकुरुजागलविदर्भवत्सावतीवनभेदपल्लवदशार्णकच्छमहाकच्छ——-मगधरम्यकाश्मीरकुरुसौभद्रकादिविविधविषयान् तज्जनपदमध्यभागेषु परिखावप्रपाकारगोपुराट्टालकालकृतानि नानाविधनगराणि च ग्रामपु-रखेटकर्वटादिक च परिकल्पयामास ॥

पुराणि परिकल्पयन्नमुचिसूदनः सार्थकं

---

१ नृपश्चयत्नुपालितो देशः । २ जलप्रायमनूप स्यात् ॥३ निर्वारिदेशो जागल.

पुरंदरसमाव्हयं दधदयं विभोः शासनात् ॥
यथोचितपदेषु ता भुवि निवेश्य सर्वाः प्रजाः ॥
त्रिविष्टपमुपासदन्निखिलखेखवर्गैः समं ॥ ८ ॥
सृष्ट्वा क्षत्रियवैश्यशूद्रविदितं वर्णत्रयं स प्रभुः ॥
वृत्तिं चास्य तथा यथार्हमकरोत्षट्कर्मसंपादितां ॥
तामाज्ञां त्रिजगद्गुरोर्हिततमां मूर्ध्ना दधानाः प्रजाः ॥
प्रापुः क्षेमपरंपरामतितरां निर्विघ्नमुर्वीतले ॥ ९ ॥
युगादिब्रह्मणा तेन यदित्थं स कृतो युगः ॥
ततः कृतयुगं नाम्ना तं पुराणविदो विदुः ॥ १० ॥
आदीशस्य विधातुमुत्सुकमना राज्याभिषेकोत्सवं ॥
स्फूर्जत्तूर्यविरावपूरमुखरव्योमावकाशस्ततः ॥
व्यावल्गन्मणिभूषणद्युतिझरीनिर्धूतभानुप्रभैः ॥
देवैः साकमवातरत्रिदिवतो गोत्रोहितः सोत्सवं ॥११॥

ततः पर नाकराजो नाभिराजादिपरिवृतस्त्रिभुवनगुरुपट्टाभिषेकाय त्वरमाणः, शुभे मुहूर्ते सुरशिल्पिजनकल्पिते, मंजुलसुरभिमृत्स्नाविरचितवेदिकाविराजमाने, चंचत्पंचरत्नचूर्णविरचितरंगवल्लीविराजितसुनाशिरशरासने, व्यामुक्तमुक्ताफलशोभमानविरचितवितानाचिश्च्छायाछुरितसुंदरपुरंदरमाणिकुट्टिमबंधुरतया विडंबिते, संध्यारागरंजितसौदामिनीसंगीतनीलजलधरपटले, विविधोपकरणसमुद्धरणनियमितानेकनाककामिनीनिरुद्धसंचारमार्गे, संचरत्पौरविलासिनीललितमृदुलपदन्यासमंजुगुंजन्मंजीरमनोहरझंकारप्रवर्धमानकोलाहले, पारावार

१ इंद्रः ।

इव परिशोभितरगे सर्वतोमुखसमृद्धे कुशलिमकरे च, पद्माकर इव विकस्वरशोभन[1]तामरसाहिते कमलाकरे च, नदनवन इव सुराग[2]शोभिते ताल[3]मनोहरे मधुराप्सरःकलशोभिते च नृपभवनमध्यलसमानाभिषेकमंडपे सुरवारवनिताकरपल्लवविधूयमानचारुचामरसमीरांदोलितप्रलबमानमंदारमालांचित देव भुवनपतिं हरिविष्टरे प्राड्मुख विनिवेशयामास॥

तत्रानंदात्रिभुवनपतिं विष्टरे तस्थिवांसं ।
गंगासिंधुप्रमुखसलिलैरभ्यपिंचन्सुरेशाः ॥
भूपा नाभिक्षितिपतिमुखाः पौरवर्गाश्च भर्तुः ।
तीर्थोपात्तैः सुरभिसलिलैस्तेऽभिषेकं वितेनुः ॥१२॥

तदनु हैमस्नानजलकुंडे कृतावगाहनस्त्रिभुवनकमनः कुंकुमारुणपयोधरैररुणप्रभाधरपल्लवशोभितमुखभागैः कोमलमधुकरसंगतैः कलधौतरुचिरुचिरैः कामिनीजनैः कनककलशैश्च स्नापितः कृतनीराजनश्चात्मवत्कल्याण[4]गुण वसन परिधाय, सरसमुकुरमवलोक्य भद्रश्रीख्यातिकलित चदन च धृत्वा,सद्वृत्त[5]रत्नमंडितैःसदाखड[6]लसमप्रभाविराजितैर्मुक्ता[7]मयैर्नवपुष्परागै[8]ः त्रिदशजनैर्भूषणगणैश्च भूषित. । स्वात्मानमिव सुपर्वां[9]चित सुरुचिर[10]मणीमनोहर च नाभिराजार्पित मौलिं शिरसि निदधानो राज-

१ शोभ–नत–अमरसहिते, शोभन–तामरसहिते सुदरकमलहितकरे इति भावः । २ सुरागः कल्पतरुः । शोभनरागोपेत गायन । ३ तालवृक्षमनोहरे, तालः कालक्रियामानं । ४ मगलगुणं, सुवर्णमयततुयुक्त । ५ सच्चरित्ररत्नमडितैः वर्तुलरत्नमंडितैश्च । ६ इद्रः अखंड–लसत्प्रभा । ७ मुक्ताफलसंपन्नैः, रोगरहितैश्च । ८ न वपुषि अरागैः, नवपुष्परागैः । ९ सुपर्वाभिः शिखरैरंचित युक्त पक्षे देवयुक्त । १० सुरुचि–रमणीमनोहरं, सुरुचिर–मणीमनोहर ॥

ताम्युदयाकरेण नाभिराजकरेण पट्टबन्धेन च बंधिनल्ललाटतटः परं विरराज ॥

तदानीं उदारवचनमकरदाः सुवदिन इत्थं पठन्ति स्म ॥

देव! त्वं लोकसेव्यः प्रकृतिविलसने कोविदो मुक्तलोभः ॥
आजन्मगैः कलार्हैररिलयनियतः कीलसंकाशवीर्यः ॥ १३ ॥

रामालास्यप्रकारप्रकटितहृदयः सत्प्रभालाभयोग्यः
तद्वल्लोकाधिनाथ! स्फुरति तव रिपुर्लेशं एवारिन भेदः॥१४॥

मर्ता सत्कार्यभूम्नां शुभकररमितरत्न दयोदामशीलो ।
मीनांकश्लघ्यदेहो मितरहितयशाः मानिभि सेवितश्री ॥
प्रज्ञावद्भिः प्रमेयः प्रतिमतकुशलः मासासाम्यो न कश्चित् ।
लोकेश! त्वत्सपत्नो न खलु तव समो मोहमाप्नोति विश्वक् ॥१५

देव! त्वं काशपुष्पस्तवकनिभयशा गोविशालोत्सवाढ्य ।
दानैकायत्तचित्तो रिपुजनविततेः शासने धीरधीरः ॥

---

१ प्रजारञ्जने । २ विद्वान् । ३ अस्मिन् श्लोके लकाराः शकारीभवन्ति यदा तदा शत्रुवर्णनं जायते । यथा, शोकसेव्यः प्रकृतिविशसने, मुक्तशोभः, कशार्हैः, अरिशयनियतः, कीशसकाशवीर्यः—कपिसमानवीर्यः । वृषभजिनपक्षे कीलसंकाशवीर्यः अयःशलाकासदृशवीर्यः, रामाशास्यप्रकारप्रकटितहृदयः ४ अस्मिन् श्लोके मकारस्थाने हकारे कृते सति शत्रुवर्णनं भवति । यथा हता, शुभकररहितः, दयोद्दाहशीलः, हीनाकश्लाघ्यदेहः, मीनांकश्लव्यदेहः मीनाको मदनः । हितरहितयशाः, हानिभिः, प्रहेयः, प्रतिहतकुशलः, प्राप्त-साह्यो, ५ दर्भपुष्पसदृशकीर्तिः शत्रुपक्षे प्रतिपदमाकारो योज्यः । आका-शपुष्पस्तवकनिभयशाः ६ गो भूमिः शत्रुपक्षे आगोविशालोत्सवाढ्यः - ७ आदानैकायत्तचित्तः शत्रुपक्षे, ८ शत्रुपक्षे आशासने ।

भासेद्वार्द्धिर्मयाढ्यो भुवि लयरहितो धीद्धवृत्तिर्धरेण ।
युक्तस्त्वद्वत्कथं स्याद्रिपुरमरनुता भाग्भजत्यापदं सः ॥१५॥

किं च देव खलु करोदितबलविभवः कविगीतयशाः करिमिलितदिगंतरः कमलविलसितनयनयुगः कोपक्रियाविरहितः कातोपलालितहर्षः कामाभतनुलतः कार्तस्वरपात्रविचित्रसदनः कर्णसंयोजितमहार्घभूषणकारणाश्रिताधुरीणमानसः कवनयोग्यपवित्रचरित्रः कार्यसमापनतत्परः कामितविभवत्यागी कासारविराजितभवनप्रदेशः करेणुवृंदस्थपुटितमंदिरद्वारदेशः काननस्थापितपरतृणः कालवालजलदस्तवरिपुरतु पूर्वकान्न रक्षतीति कथं तव कक्षा गाहते इति ॥

ततः सानंदमानदनाटकं कुलिशायुधः ॥
प्रयुज्यास्थायिकारंगे प्रत्यगाद्दिवं सुरैः सह ॥ १७ ॥

---

१ मया लक्ष्म्या । शत्रुपक्षे आमयाढ्यो रोगेण प्राप्तः । २ शत्रुपक्षे आलयरहितो । ३ आधीद्धवृत्तिः 'आधिर्ना मानसी व्यथेत्यमरः, ४ अस्मिन्गद्ये प्रतिशद्ब ककाराः सन्ति तेषा परित्यागेन शत्रुवर्णनं भवति तद्यथा—रोदितबलविभवः,विगीतयशः परिमिलितदिगतरः मलविलसितनयनयुगः इत्यादिक । ५निंदितयशाः इति शत्रुपक्षे। ६ उपक्रिया उपकारः। ७ अतस्य यमस्य उपलालितो हर्षो येन सः ८ अमाभतनुलतः अशोभततनुवल्लिः । ९ कार्तस्वर सुवर्ण शत्रुपक्षे आर्तस्वरयोग्य चित्रविहीन सदन यस्य स.। १० ऋणेन सयोजितामूल्यालकारः। ११ रणेति। १२ कवन स्तुतिः वन अरण्य च । १३ कार्यसमापने आसक्तः शत्रुपक्षे आर्यजननाशे तत्परः । १४ कामितं इष्ट, पक्षे अमित । १५ कासारोल्पसरः पक्षे आसारः धारासंपातः । १६ करेणुर्गजः शत्रुपक्षे रेणुर्धूलिः । १७ कानन वन पक्षे आनन मुख मुखस्थापितोत्कृष्टतृणो रिपुः । १८ गा स्वर्ग ।

अथ स मुकुटबद्धमोल्लसन्मौक्तिमाला-
मस्राणितनरवराजीराजितो विश्वस्रष्टा ॥
विधृतसकलभारो नाभिराजोपकंठे ।
प्रकृतिनिचयरक्षायत्नमित्थ चकार ॥ १८ ॥

तदानीं त्रिभुवनपतिः शस्त्रशोभितभुजेन स्वात्मना सृष्टानां क्षतत्राणधुरीणानां क्षत्रियाणां प्रजापालनशरणागतरक्षणादिकं, ऊरुभ्यां यात्रां प्रदर्श्य सृष्टानां वैश्यानां जलस्थलयात्राप्रवृत्तिं, पादाभ्यां सृष्टानां शूद्राणां वर्णोत्तमशुश्रूषां च यथार्हमुपदिश्य तद्वृत्तेरनतिक्रमाय दंडमेवोद्दंडसाधनं मन्यमानः, चतुःसहस्रमुकुटबद्धपरिवृत्तान्सोमप्रभहर्यकंपनकाश्यपनामधेयान्महामंडलीकान्नरपालान्मूर्धाभिषिक्तान्दंडधरान्विधाय सोमप्रभस्य कुरुराजाभिधानं कुरुवंशाग्रगण्यतां च, हरेश्च हरिकांतसमाव्हयं हरिवंशातिलकता च, अकंपनस्य पुनः श्रीधरनामधेयं नाथवंशमुक्तालता च, काश्यपस्य मघवाव्हय उग्रवंशललामता च प्रथयाचकार ॥

प्रभुः कच्छमहाकच्छप्रमुखान्वसुधापतीन् ॥
स्वाधिराजपदे देवः स्थापयामास सत्कृतान् ॥ १९ ॥

तदनु पुत्रानपि विचित्रवस्तुवाहनसंपदा संयोजयन्नयमादिदेवः सकलनराणामिक्षुरससंग्रहणघटनेनेक्ष्वाकुरिति, प्रजाजीवनोपायकल्पनेन प्रजापतिरिति, निजकुलोद्धरणेन कुलधर इति, काश्यपदवाच्यतेजःपरिपालनेन काश्यप इति, कृतयुगप्रारंभस्य आदिभूतत्वेन आदिब्रह्मेत्यादिनामधेयानि निखिलजनकर्णरसायनानि प्रकटयामास ॥

नाकाधीश्वरमौलिमौक्तिकमणीतारावलीसेवित—
प्रोद्यत्पादनखेंदुबिंबविततिर्लोकत्रयाधीश्वरः ॥
दिव्यस्रग्मणिभूषणांबरधरः साकेतसिंहासना—
रूढः पुत्रकलत्रमित्रसहितः शास्ति स्म विश्वंभरां ॥२०॥
तदा देवे पृथ्वीमवति घनसंपत्तिरभवत् ।
न वारिप्राचुर्यं तदपि भुवनेषु क्वचिदभूत ॥
भयेभ्यः स्वं त्रातर्यपि महितनीतिज्ञचतुरोऽ
प्यनीतिः पौरोऽयं समजनि भयाढ्यश्च वत हा ॥२१॥

अथ कदाचन महास्थानमध्ये पूर्वाचलतटमिव पुंडरीकिनीविट सिंहासनमलंकुर्वन्तं नृपशतपरिवृत त्रिभुवनपतिमुपासितुमागतेन भर्तुर्विषयेषु विरातिमापादयितुमुद्यतेन पाकाहितेन प्रेरिता प्रक्षीणायुर्दशा नीलांजना नाम सुरनर्तकी सविलासं नटंती सौदामिनीव क्षणाददृश्यतामाससाद ॥

तदा सुरेंद्रो रसभंगभीत्या प्रायुंक्त तस्याः सदृशं मनोज्ञं ॥
पात्रांतर तुल्यविलासवेष तथापि वेत्ति स्म तदेष देवः॥२२॥
ततोऽस्य चेतसीत्यासीच्चिंता भोगाद्विरज्यतः ।
परां संवेगनिर्वेगभावनां समुपेयुषः ॥ २३ ॥

---

१ विपुलं धन पक्षे मेघसंपत्तिः ।२ जलप्राचुर्यं पक्षे वा—अरिप्राचुर्यं । ३ नीतिरहितः पक्षे न ईतयः पीडा यस्य सोऽनीतिः । अतिवृष्ट्यादिसप्तेतिरहितः । ४ भयाढ्यः भीतियुक्तः पक्षे भया कान्त्या आढ्यः सपन्नः । उपर्युक्तश्लोकाभिप्रायतुल्यो धमशर्माभ्युदयेऽपि अष्टादशसर्गस्थः श्लोकोय अजस्रमासीद्धनसंपदागमो न वारिसंपत्तिरदृश्यत क्वचित् ॥ प्रसह्य रक्षत्यपि नीतिमक्षतामभूदनीतिः सुखभाजनं जनः ॥ भयापहारिण्यपि तत्र सर्वतः को नाम नासीत्प्रभयान्वितः क्षितौ ॥ ५ कमलिनीपातं सूर्यमित्यर्थः ।

वातोद्धूतप्रसरविसरद्दीपतुल्यं शरीरं ।
लक्ष्मीरेषा विलसिततडिद्वल्लरीसंनिकाशा ॥
संध्यारागप्रतिममुदितं यौवनं चातिलोलं ।
एतत्सौख्यं पुनरिह पयोराशिवीचीविलोलम् ॥ २४ ॥
देवी काचिद्वासवाज्ञावशेन नृत्यंती यन्नीरजाक्षी पुरस्तात् ॥
याता दैवादीदृशीं चेदवस्थां को वा लोके संस्तुतौ निर्व्यपायः२५
विषराशिसमुपजातां लक्ष्मीं तु मंदरागेण ॥
पीयूषवार्धिजातां मुग्धाः कलयन्त्यमंदरागकरीं ॥ २६ ॥
नीरक्षीरनयेन यः परिणतो जीवस्य देहाश्चिरा—
दाधारः सुखदुःखयोः स विलयं कालेन संयाति चेत् ॥
बाह्ये पुत्रकलत्रमुख्यविभवे का वा मनीषाजुषा—
मास्था किंतु विमोहचेष्टितमिदं बध्नाति सर्वं जनं ॥२७॥
जंतुः पापवशादवाप्तनरको भुक्त्वातिदुःखं तत ।
च्युत्वा कालवशेन याति विविधं तैरश्चदुःखं तत ॥
एवं दुःखपरंपरामतितरां भुक्त्वा मनुष्यः पुनः ।
जातश्चेत्स्वहिते मतिं न कुरुते तद्दुःखमात्यंतिकं ॥ २८ ॥

एवं चिंतयंत मुक्तिलक्ष्म्या संदिष्टाभिः समागताभिस्तत्सखीभिरिव विशुद्धिभिः समाश्रितांतरंगं देवं बोधयितुं सारस्वतादित्यप्रमुखलौकांतिकसुरपंक्तिमुकुटमणिघृणिभिर्निरभ्रेऽपि गगने पुरंदरचापलक्ष्मी-

---

१ विषराशिः गरलसमूहः पक्षे विषाणां जलानां राशिः समुद्र इत्यर्थः॥ २ मंदर—अगेन मंदरपर्वतेन पक्षे मंदप्रीत्या। ३ विपुलप्रीतिकरीं पक्षे अमंदरागपर्वतकरीं ॥

मकूरयंतां मुकुलीकृतहस्तपल्लवा त्रिभुवनवल्लभमासाद्य प्रणम्य चेमां वाचमुवाच ॥

साधु देव ! हृदि साधु चिंतितं संसृतिप्रकटदुःखभंजनं ॥
येन नाथ! भवतो न केवलं किं तु सर्वजगतां हितं कृतम्॥२९॥
परिनिष्क्रमणस्य काललब्धिस्त्रिजगन्नाथ समीपमागता ते ॥
अनुरक्ततया समागमाय प्रियदूती प्रहिता तपःश्रियेव ॥ ३० ॥
स्वयं सम्यग्ज्ञातात्रिविधहितमार्गोऽसि भगवन् !
न बोध्यो मादृक्षैरिति विदितमेव स्फुटतरम् ॥
अथाप्याचारोऽयं चिरपरिचितो बोधनविधौ ॥
तवाभ्यर्णेप्यस्मान्मुखरयति नाथ! त्रिजगतां ॥ ३१ ॥
धीरसैरस महावृद्धिं तन्वतो जलदस्य ते ॥
प्रियंतां धर्मवृष्ट्याद्य भव्यचातकपोतकाः ॥ ३२ ॥
परीषहभटोद्भटां प्रबलकर्मसेनामिमां ।
विमोहपरिपालितां विमलसत्तपोवैभवात् ॥
सुखेन जगतां पते ! जयतु जातरूपो भवान् ।
भजस्व च सुखोत्तरां विशदमोक्षलक्ष्मीं ततः ॥ ३३ ॥

इति बोधयित्वा कृतार्थेषु लौकांतिकसुरसार्थेषु हंसेष्विव गगनागणमुत्पतितेषु कंपितविष्टराः पुरंदरपुरःसराः सर्वेऽपि सुराः विलोकनलालस निर्निमेषलोचन प्रासादविलसमानललनाजन निजवधूविशंकया विलोकमाना. साकेतपुर प्रविश्य पुरुदेवस्य पयः पारावा-

---

१ रत्नत्रयरूप आत्महितकरो मोक्षमार्गः । २ वृद्धिरसस्य वृद्धिजलस्येत्यर्थः ।

रनीराभिषेकपुरःसर परिनिष्क्रमणकल्याणारंभ विजृंभयामासुः॥

ततो देवः श्रीमान्महिवलयसाम्राज्यसरणौ ।
तनूजानामाद्यं भरतमभिषिच्य प्रमदतः ॥
युवाधीशं कृत्वा भुजबलिसुतं कीर्तिसहितं ॥
समस्तैर्भूपालैः सह समतनोदुत्सवकलां ॥ ३४ ॥
वितीर्णराज्यभारस्य विभोर्निजतनूजयोः
परिनिष्क्रमणोद्योगस्तदा जज्ञे निराकुलः ॥ ३५ ॥

तत्रोत्सवद्वंद्वविजृंभमाणकोलाहलोत्तालदिगंतराले ॥
शेषात्मजेभ्यश्च महीं विभज्य विश्राणयामास विभुः प्रहृष्टः ॥३६॥

तदनु त्रिभुवनपतिः प्रसन्नमतिर्नाभिराजदीनापृच्छय नाकेराजदत्तहस्तावलंबो, दीक्षांगनापरिष्वंगमंगलशयनायमान याप्ययानमारूढः, सप्तपदानि भुवि भूपालैस्तथा सप्तपदानि नभसि नभश्चरैस्तदनु प्रेमबंधुरैः सुरासुरैश्च निरुह्यमानस्तारापथादापतन्त्या दीक्षांगनाकटाक्षधारानुकारिण्या संरम्भसमाकृष्टभृंगश्रेण्या पुष्पवृष्ट्या व्याकीर्णः, सुरबंदिसंदोहपाठ्यमानमंगलारावसंगतप्रस्थानभेरीभांकारेण समूचितमोहारिविजययात्रः, नभस्थलोड्डीनहंससहस्रशंकाकरैः सुरनिकरव्याधूयमानचामरैर्निर्लिंपकरपंकजविधृतधवलातपत्रेण परिनिष्क्रमणाविलोकनकौतुकसमायातपूर्णेन्दुबिंबप्रतिबिंबेन च सेव्यमानः. शोकानिलसमाघ्रातवेपमानतनुलताभिः स्खलत्पदन्यासमनुव्रजंतीभिः मूर्च्छामीलितनयनमथि धरणीपृष्ठे निपत्य कथंचिद्वृद्धधात्रीजनेन समुद्धृताभिरुत्कंपस्तनयुग-

१ दीक्षादानार्थमुद्योगः । २ भरतस्य राज्याभिषेक. तीर्थकर्तु. दीक्षाप्रयाणोत्सवश्च । ३ ददौ । ४ इंद्रः । ५ शिबिका । ६ देवाः । ७ शोकपवनस्य । ८ भूतले ।

लोवस्त्रस्तांशुकाभिर्विगलत्कचनिचयनिष्पतत्पुष्पमालाभिर्देवीभिर्मध्येमार्गं महत्तैरः कचुकिवरैर्निरुद्धाभिर्दूरादुद्गतग्रीव निरीक्ष्यमाणः. शुद्धांतमुख्याभिः परिवारिताभ्यां भर्तुरिच्छानुवार्तिनीभ्यां यशस्वतीसुनंदाभ्यां मरुदेव्या चान्वीयमानो, नाभिराजभरतेश्वरबाहुबलिकच्छमहाकच्छ प्रधानपार्थिवैश्च निरीक्ष्यमाणपरिनिष्क्रमणः, साकेतपुरस्य नातिदूरे सिद्धार्थकवनोद्देशे, निरतरनिचिततरुनिकरनिष्पतत्पुष्पोपहारशोभिते, पुरंदरसुदरीकरारविंदकल्पितरत्नचूर्णरगवलिविराजिते, सुरवारांगनारब्धमगलसंगीतमनोहरे, विशंकटपटपरिकल्पितमडपमडिते, पर्यंतनिहितविविधमगलद्रव्यसगते, पाडुकशिलातलविलासोपहासिनि, कस्मिंश्चिच्चद्रकाताशिलातले गीर्वाणैरुर्वीमवतारिताद्यानादवततार ॥

क्षणं तत्र स्थित्वा नरसुरसभां स्निग्धमधुरैः ।
कटाक्षैः संभाव्य स्वजनमयमापृच्छ्य सहसा ॥
सुरेंद्रे सन्नद्धे परिचरति मध्ये यवनिकं ।
स नैःसंग्यं भेजे वसनमणिमाल्यानि विसृजन् ॥ ३८ ॥
ततः पूर्वमुखं स्थित्वा कृतसिद्धनमस्क्रियः ।
तत्सर्वं विधुरत्याक्षीन्निर्व्यपेक्षं त्रिसाक्षिकम् ॥ ३९ ॥
कर्मक्ष्मारुहमूलजालसदृशान्केशोत्करान्पचधा ।
देवः कोमलपंचमुष्टिभिरसावुत्खाय सद्भावनः ॥
चैत्रे मेचकपक्षके सुसमये शस्तोत्तराषाढभे ।
सायान्हे नवमीदिने शुभगुणे जग्राह दीक्षां प्रभुः ॥ ४० ॥

१ पट्टमहिषीभिः । २ अंतःपुर । ३ इद्रसिद्धात्मसाक्षिक ॥ ४ वृक्ष ५ कृष्णपक्षे ।

तदनु कुलिशायुधः कुतुकितमानसस्त्रिजगद्गुरोर्मूर्ध्नि निवासेन पावनान्विमलदुकूलप्रतिच्छन्ने पृथुलनूत्नसमुद्गके स्थापितान् शशांकबिंबविलसितकलंकलेशसकाशान्विततपुंडरीकसंगतभृंगसंघनिकाशान्श्यामलकोमलकेशानतिविभवेन नीत्वा पयःपारावारे समर्पयामास ॥

तत्र किल सैवालिकावलिर्विततया हिमालया विलसितमेचकरुचिरुचिरा पूर्वतनसुवर्णवर्णेशसगात् कलशवाराशिसलिले सैवालकावलिर्बभूवेति न विचित्रमेतत् ॥

**तत्रार्पितं कचकुलं कलशांबुराशिर्वीचीकरेण परिगृह्य तदादरेण ॥**
**डिंडीरखंडकपटेन कृताट्टहासो मोदाच्चलल्लहरिबाहुरयं ननर्त ४१**

तत्र कौतुकेन विलोकमानानां नाकलोकजनानां मेचकरुचिरुचिरतत्कचनिचयेन शैवालपुंजपिंजरित इव, क्वचिद्वातानीतजलधरखंडमंडित इव, एकत्र समुन्मीलितकुवलयकोरकित इव, परत्र पुरंदरमणिप्रभापरीत इव, अन्यत्रातःसंचरज्जलदेवताकबरीभरपरीत इव, कुत्रचन श्यामलपन्नगमेचकित इव च कलशतटिनीविटश्चकासामास ॥

**ततः समागत्य मुदा मरुत्वान्स्तुत्वा च नत्वा च जिनेंद्रपादौ ॥**
**निर्लिंपवर्गैः सह नाकलोकं जगाम सम्यक्स्मृततद्गुणौघः ॥४२॥**

तदा किल कच्छमहाकच्छप्रमुखाश्चतुःसहस्रसंख्याता नरपालास्तरंगितकेवलद्रव्यालिंगाः, परिवर्धितस्वामिभक्ति परिष्वंगाः, केवलं स्वामिभक्त्यैव दीक्षामभजंत ॥

**अव्यक्तसंयतमहीरमणैः परीतो ।**
**दीक्षालताविलसितो वृषभेश्वरोऽयं ॥**

---

१ पृथुलनवकरंडके । २ सा एव अलकावालिः पक्षे शैवालपंक्तिः । ३ सर्पमालया । ४ अन्यत्र । ५ क्षीरसमुद्रः ।

बालांघ्रिपैः परिवृतस्य सुरद्रुमस्य ।
लक्ष्मीमसौ त्रिभुवनैकगुरुर्बभार ॥ ४३ ॥
अथ भरतनरेंद्रो भक्तिसांद्रो मुनींद्र ।
सह भुजबलिमुख्यैः सोदरैः पूजयित्वा ॥
तदनु तपनबिंबे पश्चिमाशाप्रलंबे ।
प्रभुरविशदयोध्यां स्वामिवाजामलंघ्यां ॥ ४४ ॥

* इत्यर्हद्दासकृतौ पुरुदेवचम्पूप्रबन्धे सप्तमः स्तबकः ॥ *



# अष्टमः स्तवकः

तदनु कलितकायोत्सर्ग. प्रतिज्ञातषण्मासानशन· समग्रैकाग्रता-निरुद्धान्तर्बाह्यकरणव्यापारः साकार इव धैर्यगुणो, मूर्त इव शमः, सुस्थिरनिश्चलांगतयालेख्यालिखित इव विलसमानो, निगूढाक्षर किंचिदन्तर्जल्पाकारतया निगूढनिर्झरमुखरकंदरो धराधर इव, सुगाधिनिर्गतानिश्वासगंधाहूतपुष्पधंयपरीतलपनसविधप्रदेशतया बहिर्निष्कासिताशुद्धलेश्यांश इव, दीक्षानंतरसमुद्भूतज्ञानचतुष्टययुक्ततया प्रदीपविशिष्टो मणिमयानिलय इव च लक्ष्यमाणः, संत्यक्तसर्वपरिग्रहोऽपि मुक्ताहारः सर्वदोपत्यकातासक्तः स्वीकृतानंतवसनो विग्रहोत्थितारातिविग्रहतत्परश्चेति राज्यलक्ष्मीपरिष्वक्त इव तप.श्रीवल्लभस्त्रिभुवनवल्लभ. प्रचुराश्चर्यं दुश्चरं तपश्चचार ॥

अयमथ तपःसिद्ध्या दृश्येतरातपवारण ।

---

१ चित्रलिखितः । २ मौक्तिकमालया युक्त इति विरोध , मुक्त-आहारो येन स इति परिहारः । ३ सर्वदः,-अपत्यकातासक्त इति विरोधः सर्वदा उपत्यका–अंत–आसक्तः । उपत्यका अद्रेरासन्ना भूमिस्तामध्यासिनः । ४ स्वीकृतानि अनंतानि वस्त्राणि येनेति विरोधः परिहारस्त्वेव स्वीकृत अनंतं आकाशमेव वसन वस्त्रं येन सः । ५ युद्धे सन्नद्धशत्रुनिग्रहः इति विरोधे देहोत्पन्नमोहादिशत्रुनाशनतत्परः] ॥

मुक्ताहारः सर्वदोपत्यकातारब्धप्रीति. स्वीकृतानंतवासाः ॥ देवो· धुन्वान्विग्रहस्थानरातीन्कांतारेऽपि प्राप सौराज्यलीलाम् ॥ ३७ ॥

एव धर्मशर्माभ्युदयेऽपि विंशतितमे सर्गे ॥ ६ अदृश्य छत्र ।

प्रकटितघनच्छायोप्युद्यत्परिच्छदनिःस्पृहः ॥
वनघनतरुश्रेणीस्पंदत्समीरणचंचल—
न्नवकिसलयै रेजे सच्चामरैरिव वीजितः ॥ १ ॥

एवं द्वित्रिमासेषु किंचिदूनेषु गतेषु परीषहप्रभंजनप्रभंजितधृतयस्ते मुनिमानिनो राजर्षयस्तस्य गुरोर्गरीयसीं पदवीं, सिंहस्येव मृगशावकाः, गरुडस्येवेतरविहगमाः, गंतुमक्षमाः, नदीजलफलमूलाद्याहाराय प्रवृत्ताः, वनदेवताभिर्निषिद्धदिगंबरवेषा, केचन वल्कलवसना केचन कौपीनधराः, परे भस्मोध्दूलितांगाः, कतिचन जटाजटिलमस्तकाः एकदण्डिनस्त्रिदण्डिनश्च भूत्वा, भरतराजभयेन तद्देशान्निवृत्य वनेषु कृतोटजाः, प्रतिदिन पुष्पादिभिर्विभूषितमेन पुरुदेवं पूजयामासुः ॥

मरीचिश्च श्रीमद्भरतनृपपुत्रो मुनिनिभः ।
चिकीर्षुर्मिथ्यात्वप्रबलतरवृद्धिं गलगतिः ॥
तदा योगं शास्त्रं कपिलमततंत्रं च विदधे ।
जनोऽयं येनाद्य प्रभजति महामोहसरणीं ॥ २ ॥

एवमेतेषु सवृत्तेषु निर्लेपैर्गिरिरिव निष्कंपः, पारावार इवाक्षोभो, वायुरिव निःसंग, आकाश इव निर्लेपस्तपोवैभवजृंभितकांतिनिराकृतनिशाकरदिवाकरः पुरुदेवः प्रकटसयमैककटकस्त्रिगुप्तिपरिगुप्तो गुणसैनिकपरीतः कर्मारिविजिगीषुरासामास ॥

जटीभूताः केशा विभुशिरसि संस्कारविरहा—
त्तदानीं ध्यानाग्निप्रतपनविशुद्धस्य बहुधा ॥
स्वजीवस्वर्णस्योद्धृतमलिनदोषा इव तथा

---

१ मेरुपर्वतः। २

विरेजुर्निर्दग्धप्रसवशरभूमा इव च ते ॥ ३ ॥

तदानीं तद्वन वृषभेश्वरतप.प्रभावेन प्रशांतपावन बभूव ॥

कंटकालग्नवालाग्रान् कोमलांश्चमरीमृगान् ॥

कंठीरवाः स्वनखरैः कौतुकेन व्यमोचयन् ॥ ४ ॥

पंचाननसुतं तत्र पिबंतं जननीस्तनं ॥

करेणुपोताः कर्षन्ति क्रीडितुं कुतुकांचिताः ॥ ५ ॥

एव प्रशातपावने वने तपस्यतो भगवत पादमूलमुपाश्रितौ सकलभुवनकमन ! त्वया पुत्रनप्त्रादिभ्य. साम्राज्यसविभागकाले विस्मृतावावामद्य भोगप्रदानेनानुग्राह्याविति भगवतमनुबध्नंतौ नमिविनमिनामधेयौ कच्छमहाकच्छनरपातिनयौ स्वासनकपविदितभगवद्धचानांतरायो धरणेंद्रः समागत्य, सोपायमिमौ समाश्वास्य, ताभ्या सह विमानमारूढस्तापप्रकाशाभ्या तपन इव व्योममार्गेण प्रस्थितो, भगवत्कीर्तिपुंजमिव मूर्तिमतं रजतसानुमतमुपजगाम ॥

जंबूद्वीपमहांबुजस्य लवणांभोराशिमध्यस्थिते. ।

तत्तत्क्षेत्रदलोज्ज्वलस्य सततं यो हंसवद्भासते ॥

तस्यांडा इव गंडशैलनिकरा राजंति तत्राभितः ॥

सानू विद्रुमवल्लिकाविलसितौ तद्दूरापादाविव ॥ ६ ॥

तद्भूधरशिखरालकार पराध्र्यपुर प्रविश्य फणीश्वर. सकलविद्याधरभूपालानामनयोर्विद्याधरराज्यलक्ष्मीसमर्पणे भगवदनुमतिरिति प्रकटयित्वा, दक्षिणश्रेणिसाम्राज्ये नमिमुत्तरश्रेणिसाम्राज्ये च विनर्मिं विद्याधरीकरधृतै. कनककुंभैरभिषिषेच ॥

---

१ पुष्पशरो मदन. । २ विजयार्धपर्वत । ३ यः पर्वतः ।४ गडशैलास्तु च्युताः स्थूलोपला गिरेरित्यमरः ॥

एतौ खचरभूमीशमुकुटारूढशासनौ—
शासतः स्मः धरां धीरा विद्यासिद्धिमुपेयुषौ ॥ ७ ॥
ततः श्रीमान्लेखाचल इव परं निश्चलतनू-
रनीतः षण्मासांश्चिरविहितयोगात्तु विरमन् ॥
शरीरस्थित्यर्थं विहितमतिराहारममलं ॥
समाहर्तुं प्रायात्प्रथितयतिचर्याप्रकटनः ॥ ८ ॥

तदनु देवदत्ते निर्दोषैविष्वणान्वेषणाय पुराकरग्राममडबादिषु-विहरमाणे, भगवत्पादपयोजविन्यासस्थालिं शिरसा प्रणमत केचन देव ? प्रसीद किं कृत्यमिति पृच्छा चक्रुः परे च परार्ध्यरत्नानि समानीय पुरत. परिकल्पयामासुः, अन्ये च वस्तुवाहनादिक विभोरढौकयत, परं तु भूषणगणलालितांगर्लितांगीः परिणाययितु देव प्रार्थयामासु, केचन स्वादुतरमाहार मज्जन-सामग्र्या सह समानीय सगृहाणेति विज्ञापयामासु· ॥

एवं मोहवशाद्यथामति जनेष्वारभमाणेष्वयं ॥
तूष्णींभावमुपाश्रितो मुनिवरश्चर्यां परामाश्रितः ॥
विघ्ने तत्र विजृंभितेप्यविकृतमाज्यप्रसोदन्मनाः
षण्मासानतिवाह्य पूर्णमकरोत्संवत्सरांतं प्रभुः ॥९॥

तदा खलु कुरुजागलविषयाविशेषकायमानहास्तिनापुरपालककुरुवश तिलकसोमप्रभानुजः स्वयप्रभाश्रीमत्यार्यास्वयप्रभदेवकेशवमहीशाच्युत प्रतींद्रधनदेवचरः सर्वार्थसिद्धितः समागत्यात्र सजातः परमश्रेयोनि-दानतया श्रेयानिति विख्यातः सोय निशायाः पाश्चिमे यामे समुत्तुग-

---

१ निर्दोषाहारः ।

सुमेरुं, शाखाग्रलंविभूषणभूषित कल्पतरुं, विद्रुमपल्लवारुणकेसरं केसरिणं, शृंगाग्रलग्नमृत्स्नं वृषं, स्फुरत्कांतिमनोहरौ दिवाकरनिशाकरौ, चलाचलवीचिविशाल पारावारं,अष्टमंगलधारीणि भूतरूपाणि च स्वप्ने विलोकयामास ॥

तत: प्रभाते परितुष्टचित्तः श्रेयानयं संसदि वर्तमानं ॥
सोमप्रभं प्राप्य सुरेशतुल्यं स्वप्नान्यथावत्कथयां बभूव॥१०॥

तदनु सोमप्रभेण वीक्षितवदनारविंदः सुरगुरुप्रतिच्छद: पुरोधाः सुराद्रिदर्शनेन तद्वत्तुगः परमपुरुषो भवत्सदनमलंकरिष्यत्यन्ये च स्वप्नास्तद्गुणोन्नतिं सूचयत्यस्माकं तु महत्तरकीर्तिलाभादिसंपदां निदानभूतः पुण्योदय कुमारश्चाय तत्वविदिति प्रतिपादयामास ॥

तदानीं योगींद्रे प्रविशति पदा हास्तिनपुरं ॥
तमेनं संद्रष्टुं कुतुकितहृदां संभ्रमवतां ॥
जनानां समर्दान्निविडतररथ्यांगणजुषां
पुपूरे व्योमाध्वा प्रबलतरकोलाहलरवै: ॥११॥

तदात्वे किल संवेगवैराग्यसिध्यर्थं बद्धपरिच्छदं, जगत्कायस्वभावादितत्वान्यनुध्यायतं, सत्वगुणाधिकक्लिश्यमानाविनयेषु मैत्रीप्रमोदकारुण्यमाध्यस्थानि भावयतं, युगप्रमितदेशे पुरः प्रदेशे दृष्टिं प्रसार्य शनैः पादांबुजं गंधसिंधुरलीलया विन्यस्यंतं, राजमंदिरसमीपमापततं भगवंतं सिद्धार्थनामकाद्दौवारिकाच्छ्रुत्वाधिराजयुवराजौ सोमप्रभश्रेयांसौ अंतःपुरामात्यसेनानीप्रमुखैर्निबिडितपार्श्वभागौ ससंभ्रमं प्रत्युद्गम्य प्रणम्य च ततश्चरणारुणांबुजं निवेद्य चार्घ्यपाद्यादिकं प्रमो-

१ व्यंतर देवताः । २ पुरोहितः ३ बद्धपरिकरं । ४ प्रत्युद्गम्य अभिमुखं गत्वा ।

दस्य परा काष्ठामुपजग्मुः ॥

संप्रेक्ष्य भगवद्रूपं श्रेयान् जातिस्मरो भवन् ॥
ततो दाने रतिं चक्रे तत्संस्कारेण सगतः ॥१२॥

तदनु श्रीमतीवज्रजघादिवृत्तांत चारणयुग्माय दत्तादानं च स्मृत्वा मत्वा च वेलेयं दानयोग्येति, श्रद्धादिगुणसपन्नो नवपुण्यान्वितः श्रेयान्दानादितीर्थकर्ता, भगवते प्रासुकाहारकल्पित दान विततार ॥

सोमप्रभेण सममुज्ज्वलपुण्यकीर्ति—
लक्ष्मीमतीसहित एष विशुद्धवृत्तिः ॥
पुंड्रेक्षुकांडवरनूत्नरसस्य धारां—
श्रेयान्ददे भगवतः खलु पाणिपात्रे ॥१३॥

तदनु सुरनिकरगलितमणिविसरघणघणरवपरिगतसमनुपतदमरतरुसुरभितमकुसुमकुलसमनुसृतमधुकरनिचयमधुरतरविरुतेन, विबुधजनकरनिहतपटहपटुनिनदेन, त्रिदिवपतिसुभगवनाचिरनिवसदातिसुरभिमृदुपवनललितगतिसमनुसरदालिजालकोलाहलेनाहो दानमहो पात्रमहो दातेति गगनतलविलसितदिविजततिहृदयसरसिजमुदयपरिकलितवचनभरेण चाकाश निरवकाशमासीत् ॥

कृतार्थं स्वात्मानं सममनुत तद्भ्रातृयुगलं ॥
कृतार्थोऽयं यस्मात्स्वगृहमपुनाल्लोकसहितः ॥
परे दानस्यास्य प्रगुणमनुमोदेन बहवः ॥
सुखेनैव प्रापुः प्रचुरतरपुण्यस्य सरणिं ॥१४॥

तदनु कृतपारणं निखिल पौरसंदोहवंदितचरण गमनविलासवि-

जितवारणं त्रिभुवनरमण वनाय व्रजंत भगवतं किंचिदंतरमनुव्रज्य प्रत्यावृत्तौ तद्गुणमणीनेव मुहुर्मुहुः प्रस्तुवानौ सकलजनविस्मयनीयप्रज्ञाप्रभावौ विमलयशोविशोभितादिगंतौ कुरुकुमुदिनीकांतौ सानंदं पुरं प्राविक्षता ॥

तदादि तदुपज्ञं तद्दानं जगति पप्रथे ।
येन विस्मयमासेदुर्भूमिपा भरतादयः ॥१५॥
सुराश्च विस्मयानंदसंभूतनवकौतुकाः ॥
प्रतीताः कुरुराजं तं[२] पूजयामासुरादरात् ॥१६॥

तदनु भरतराजेन सबहुमान इमं दानोदंतं पृष्टः श्रेयान् श्रीमतीवज्रजंघभवपरिकलितचारणयुग्मदानवैभवकथनपुरःसर दानशुद्धिमित्थमचीकथत् ॥

दानं स्वस्यातिसर्गो भवति नरवरानुग्रहार्थं त्रिशुद्धि-
प्रोद्भूतं तत्पुनाति प्रचुरतरफल कीर्तिलक्ष्मीनिदानं ॥
दाता श्रद्धादिसम्यग्गुणमणिनिलयो देयमाहारशास्त्रे
भैषज्यं चाभयं चेत्युदितमथ मत रागशून्यं तु पात्रं ॥१७॥

पात्रं त्रिधा जघन्यादिभेदैर्भेदमुपेयिवत् ॥
जघन्यं शीलवान्मिथ्यादृष्टिश्च पुरुषो भवेत् ॥ १८ ॥
सद्दृष्टिर्मध्यम पात्र निःशीतलव्रतभावनः ॥
सद्दृष्टिः शीलसंपन्नः पात्रमुत्तममुच्यते ॥ १९ ॥
इत्यादिवाचमवकर्ण्य नृपोत्तमोऽय

---

१ उपज्ञा ज्ञानमाद्य स्यादित्यमरः, २ श्रेयासं ३ स्वस्य अहारादिद्रव्यस्य अतिसर्जन वितरण । ४ हे नरवर । ५ मनोवाक्कायजातं ।

भर्तुर्भवान्सुविभवांश्च निशम्य धीरः।
संपूज्य तं कुरुपतिं कुतुकेन भूयो
ध्यायन्गुरोर्गुणगणं स्वपुरं जगाम ॥२०॥

तदनु निखिलगुणसान्द्रो वृषभयोगीन्द्रः सकलसावद्यातिदूरं जिनकल्पिताचारं स्वीकुर्वाणो, योगयोग्यप्रदेशेष्ववहितध्यानाधीनमानसो विहरमाणः क्रमेणातिवाहितसंवत्सरसहस्रः, अतालविदितनगरनिकटविलसितशकटसमाव्हयोपवनविटपिमूलतलविलसमानानिराकुलनिर्जंतुकाविमलशिलापट्टे निबद्धपल्यंकासनः, पूर्वाभिमुखः प्रहितध्यानोन्मुखमानसः, परां लेश्याशुद्धिं दधानश्चेतसा परं पदमनुसंदधानः, सम्यग्दर्शनज्ञानानंतवीर्यसौख्यसूक्ष्मत्वागुरुलघुत्वावगाहान्याबाधारूपानष्टसिद्धगुणान्प्रथममनुध्यायन्, अध्रुवादिद्वादशानुप्रेक्षाभावनाभावितांतःकरणः, तदनंतरमाज्ञाविचयविपाकविचयापायविचयसंस्थानविचयविख्यातानि धर्मध्यानानि भजमानो, ज्ञानादिपरिणामेषु निरातिशयशुद्धिं संगृण्हानः क्रमाच्छुक्लध्यानपरिणतो, घातिकर्माणि निःशेषयित्वा, फाल्गुनकृष्णैकादशीदिने संप्राप्तोत्तराषाढनक्षत्रे सकलद्रव्यपर्यास्वभावोद्भासनप्रवीणं भव्यसरोजतल्लजसमुल्लसननिपुणं केवलज्ञानतरणिमुद्बोधयामास ॥

वृषभजिनपरव्यातप्राच्याचले प्रविजृंभिते।
सुरपरिषदां संतोषांभोधिवर्धनतत्परे॥
विहितबलवद्घातिर्ध्वांते च केवलबोधस—
न्नवसितकरे चित्रं दोषोद्गमो न हि पप्रथे॥ २१ ॥

---

१ घातिकर्मतिमिरः। २ सितकरश्चन्द्रः। ३ दोषाया रात्र्याः उद्गमः उदयः। पक्षे रागादिदोषोदयः।

पुष्पैर्देवौघवृष्टैः सुरपटहपटुप्रस्फुरद्ध्वानपूरै-
र्गीर्वाणस्त्रैणलास्यैरमरवरमुखोद्भूतसंस्तोत्रशब्दैः ॥
मंदारोद्यानवाटीमृदुसुरभिमरुन्मंदमंदप्रचारै-
रासीत्कैवल्यबोधोदयमहिममहो विश्वपाश्चर्यभूतः ॥२२॥

तदानीं विमलकेवलज्ञानसंपूर्णचंद्रबिंबोदयोज्जृंभितभुवनत्रयाभोधिनिर्लोलकल्लोलकोलाहलानुकारिघंटाघणघणात्कारकंठीरवगवपटहप्रणादशंखस्वनसमुत्पन्नबोधानेकयानविमानारूढकल्पजज्योतिष्कव्यंतरभवनवासिरूपचतुर्णिकायामरपरिवेष्टितः, प्रचुरतरप्रसृतनिजांगकांतिकल्लोलैर्भूषणरत्नप्रभाभिश्च गगनतलमलंकुर्वाणो, नागदत्तनामधेयाभियोग्येशकल्पितमैरावतमारूढः पुलोमजा परिष्कृतपार्श्वभागः सौधर्मपुरंदरः भगवतः कैवल्यपूजार्थं निश्चक्राम ।

हारांशुस्वच्छनीरे सुरयुवतिमुखांभोजनेत्रोत्पलश्री-
सारे काश्मीरराग¹रुणितकुचरथांगाह्वयैः शोभमाने ॥
स्फारस्रोद्भूतचंचच्चमरजकलहंसास्पदे व्योमवार्द्धौ ।
नाकेशानां विमाना मणिगणरुचिरा नावमेतेऽन्वकुर्वन् ॥२३॥
शश्वद्वादितदेवदुंदुभिरवैरापूरिताशांतराः ।
लेखास्तुंगकिरीटरश्मिरचितानेकेंद्रचापभ्रमाः ॥
उन्मीलत्तनुकांतिभिर्दधतो दिग्भित्तिचित्रभ्रमं ।
देवास्थानमवातरन्धनदसन्निर्माणमिंद्राज्ञया ॥२४॥

यः किल समवसरणस्थान भूमिभागात्पंचसहस्रदंडादुपरि वर्तमानं, द्वादशयोजनसमवृत्तेंद्रनीलशिलाघटितमसृणतलाविलसिततया निरा-

---

१ कुंकुम ।

कृतांबरोप्यसौ देवा मया सेवितः सन् अनतसौख्यानतसूतीति मत्वा समागतेन विनयसंकुचितागेन व्योमस्थलेनेव विलसमान, दिक्चतुष्टयव्यवस्थितदेवमानवातिर्यग्विनेयजनसुखारोहणहेतुभूतमणिमयविंशतिसहस्रसोपानविराजमान, भुवनत्रयलक्ष्मीलपनाविलोकनमणिदर्पणायमानं, वलयितवलारिपुचापशकाकरेण मोक्षलक्ष्मीमणिमयकंकणायमानेन, सभालक्ष्मीमणिघटितकटिसूत्रसदृशेन पंचरत्नपांसुमयेन कचिज्ज्वाज्वल्यमानपद्मरागप्रभामेदुरतया देवसद्ध्यानाग्निकीलाकलापसवलितेनेव, परत्र विमलतरमुक्ताकांतिमनोरमतया तन्मुखचन्द्रचंद्रिकाविभ्रम वितन्वता, क्वचन पद्मरागेन्द्रनीलरुचिरुचिरतया देवपरागसात्कृतकामक्रोधाशासश्रितेनेव परिशोभमानेन, रजःश्रीविराजितेनापि नीरजश्रीविराजितेन, परागेशोभितेनापि अपरागशोभितेन, घनाशामलकातिनाप्यघनाशार्मलकातिना धूलिमालेन परीत, चतुर्दिक्षु शातकुंभमयस्तभाग्रलंबितमणिमयमकरतोरणरमणीयज्योतिरमरदौवारिकपरिपालितजातरूपमयगोपुराभ्यतरमहावीथिमध्यपरिशोभमानेन मूर्तिमुपगतेनेव भर्तुरनंतचतुष्टयेन पुरुषार्थचतुष्टयप्रदानाय संसल्लक्ष्म्याः समुदस्तभुजदंडचतुष्टयसंभावनासंपादकेन जातरूपधरेणाप्यम्बरस्पर्शनविलोलध्वजविराजितेन मानस्तभचतुष्टयेन जुष्ट चकासामास ॥

विमलसलिलान्यस्य प्रांते सरांसि विरेजिरे ।

---

१ परिहृतवस्त्रो निराकृतनभाश्च । २ मया--नभसा । ३ ज्वालासमूहः । ४ प्रथमं विरोध. तत्परिहारश्च परागकान्तिविराजितेन । कमलेकान्तिविराजितेन च । ५ धूलिः । ६ पापराहितेन । ७ घना आशा दिशस्तासु अमलकातिना । ८ अघनाशेन पापविनाशेन अमला कान्तिर्यस्य तेन ।

जिनदिनमणेर्भासा यत्रत्यकोकपरंपरा ॥
निशि न विरह भेजे भेजे च वारिजमंडलं ।
मधुरसमरीवाहैर्मत्ताद्विरेफमनोज्ञतां ॥२५॥
त्रिविधगतिषु भ्रान्त्वा खिन्ना सुराधिकतोषिणी ।
बहुतरपरीतापा सा पंकजातसदोदयैः ॥
परिहृतभवासंगा गंगा जिनेंद्रमुपासितुं ॥
कलितकुतुका संसत्प्रांतेऽभवज्जलखातिका ॥२६॥
सुराधिकासक्तिसमात्तपापं । संत्यक्तुकामा द्युनदी जिनस्य
सभांतराले जलखातिकाभूदथाप्यपा, न बभूव चित्रं॥२७॥
तदभ्यंतरभूभागे विमलविकचविविधकुसुमनिकरविगलितमधुरसनिरतमधुकरमधुरतररवमुखरितदिगंतरा, मधुमदोपरक्तकामिनिकपोलकोमलच्छविना वनदेवताचरणालक्तकरसरंजितेनेव पल्लवप्रचयेन सछादिता, सुमनःसेविताप्यबोधा, अपरिमितपर्णसचयापि सप्तपर्णोपशोभिता, पुष्पवत्यपि पवित्रा, पुष्पवाटी चकासामास ॥
सालः स्वर्णमयस्ततः परमभूद्रौप्यैश्चतुर्गोपुरैः ।
प्रत्युप्तः शिखरोल्लसन्मणिगणैर्नक्षत्रशंकाकरः ॥

---

१ नरकतिर्यङ्मनुष्यगतिषु इति ध्वनिः । देवाना तोषिणी । मद्येन आल्हादिनी चेति ध्वनि । ३ अधिकसतापा, बहुजला च । ४ कमल । पापसमूहश्च । ५ निरस्तससारसहवासा, निरस्तमहादेवसंगा च । ६ देवाः मद्य च । ७ गंगा । ८ पापरहिता जलरहिता च । ९पुष्परसः । १० विद्वत्सेवितापि अज्ञेति विरोधः तत्परिहारश्च पुष्पसेविता विकासरहिता च । ११ सप्तपर्ण इति वृक्षाविशेषः॥ १२ रजःस्वलाऽपि पवित्रेति विरोधः परिहारः कुसुमयुता पवित्रा च ।

सुस्वच्छैश्चतुरंबुदैरुपगतः सुत्रामचापोत्करो ।
देवं सेवितुमेतमागत इति व्योमाध्वगैः शंकितः ॥२८॥
सत्यं सुरेंद्रचापः सालोऽभूदिति न संशयः कश्चित् ॥
घनचापलताख्यातः सुमनोधर्मत्वमाप सपदि यतः॥२९।
द्वारेषु मंगलद्रव्याण्यष्टोत्तरशतं बभुः ॥
भृंगारादीनि निधयो नव शंखादयस्तथा ॥३०॥

ततः परं दौवारिकयक्षपालिततद्गोपुरप्रांतविलसितेन मृदुमृदंगनिनादगर्जनशोभितेन शंपालतासकाशनिर्लिंपनटीसंगतेन राजतविराजितनाट्यशालायुगलेन वलितविद्युल्लताकलितस्तनितमुखरितशारदनीरदयुगलेन विराजमाना, ततश्च तदानीमुदारतपसा भगवता निरस्तकर्मश्यामिकाशकाकरीं सौरभ्यलुब्धमुग्धमधुकरश्रेण्या मंजुलगुंजितव्यंजितभेदां धूपधूमपरंपरां जनयता प्रतिमार्गं परिलसता शातकुंभयुगेन संभाविता, ततःपरं कामिनीजनेनेव तरुणाचितेन, परिशोभितरूपगतेन पयोधरोज्ज्वलसरास्थितिरमणीयेन सद्यस्तनस्तबकभरभारितेन, गगनमध्यजघनक्रीडाशैलविलसितेन कर्णिकारचितोदयेन घनामलकावलिं बिभ्राणेन विभ्रमोज्ज्वलेन च, सरागजनेनेव लतांगीकृतप्रणयेन पल्लवाभिख्यांचितेन च, वनीविख्यातेनाप्यवनीविख्यातेन, सुरसुंद-

१ तरुणपुरुषेण च । वृक्षेण च । २ तत्कालोत्पन्नपुष्पस्तबकः । पक्षे स्तनावेव स्तबकौ । ३ गगनमध्ये जानघन एव क्रीडाशैलः । पक्षे गगनमध्यमिवविस्तीर्णं जघनमेव क्रीडाशैलः । ४ कर्णिका—रचित पक्षे कर्णिकाराचित । ५ घन—आमलकावलिं आमलवृक्षपंक्तिं [ आवळ्याचें झाड ) पक्षे घना अलकावलिं । ६ वीनां पक्षिणा भ्रमो भ्रमणं । पक्षे विभ्रमो विलासः । ७ रमणी पक्षे लतायाः अगीकृतस्नेहेन । ८ पल्लवो विटः किसलयं च ।

रीजनसंदोहानंदकरशालाशोभितेनापि विशालेन. त्रिमेखलापीठाधिष्ठित-गगनचुंबिचैत्यतरुशोभितमध्यभागेन क्रीडोद्यानचतुष्टयेन जुष्टा तस्य सभा विभाति स्म ॥

रत्नस्तंभोरुलक्ष्मीस्तदनु मणिगणैर्भूषिता स्वर्णवेदी ।
विभ्राणैषा सदामंगलरुरुजघनश्रीपरीताभ्रमध्या ॥
लीलाक्षीवद्विरेजे प्रकटितसुमनोजातपुष्पाद्विलासा ।
चंचत्स्वर्णांशुकांता सकलजनदृशां तृप्तिहेतुर्मनोज्ञा ॥ ३१ ॥
गजवृषवनभवस्त्रचक्रांबुजमुख्यैरंचिता ध्वजश्रेणी ॥
वीथ्यंतरालभूमौ स्वर्णस्तंभाग्रलंबिता रेजे ॥ ३२ ॥

ततः परमष्टमंगलनवनिधिसमेतनाट्यशालाधूपघटाध्वजाभिरामनागकुमारद्वारपालकविराजितेन, रजतमयगोपुरचतुष्टयसंगतेन देवेन करिष्यमाणां धर्मव्याख्यां श्रोतुमागत्य वलयाकृतिमुपेतेनेव मानुषोत्तरपर्वतेन, शुभरुचिरसालेनापि कनकाभिख्यांचितेन, अद्वितीयेनापि द्वितीयेन प्राकारेण परिगता, ततश्च सिद्धार्चासनाथसिद्धार्थवृक्षांकितमध्यभागेन कल्पेश्वरसेवितकल्पद्रुमवनेन विलसमाना, ततश्चतुर्गोपुरविराजमानया सादरैः सुरैः समानीय निवेशितयेव कैलासाचलाधित्यकया वज्रमयवेदिकया. सुरतरुकुसुमकिसलयनिचयविरचितवंदनमालासुंदरैर्दशभी रत्नतोरणैः प्रकाशमाना, ततः पद्मरागमयैर्मूर्तैरिव जनानुरागैः सुरनिकरनिरंतरसेव्यमानैस्तादृप्यमुपगताभिरिव भगव-

---

१ सभागृह । २ विस्तृतेन । ३ रत्नस्तंभ इव ऊरु । ४ सदा मंगल पक्षे सदाम गलं पक्षे—पुष्पमालासहित । ५ मदनः, पुष्पसमूहश्च । ६ अंशुक वस्त्र । ७ रुचि—रसालेन, रुचिर—सालेन रुचिराभ्रेण, रुचिरतटेन च । ८ कनक धत्तूरको वृक्षः हेम च ।

तो नवकेवललब्धिभिर्यद्वा जिनपतिसेवाहेवाकभावेन प्रादुर्भूतैरिव नवपदार्थैर्गगनतलचुंबिभिर्रचासनाथैर्नवभिस्तूपैः परिष्कृता समवसृतिधरा विरराज ॥

आकाशे बहुधातैर स्थितियुतस्त्यक्त्वा निराकारतां ।
देवस्यास्य सभांतरे स्फटिकसत्प्राकाररूपोऽभवत् ॥
सत्यं किंतु पुरा सुमेषु विकसत्संसर्गशून्योऽधुना–
प्येवं युक्तमिदं तु चित्रमधिकं सालोप्यत्रत्युज्ज्वलः ॥२३॥

अथवा विजयार्धमहीधरः किल दुर्वर्णधर इत्यपख्याति परिमार्ष्टु उत्तमवर्णसेव्यता प्राप्तु कृतादरतया, यद्वा महाबलभवप्रभृतिसंजातप्रणयेन, यदि वा सुमेरुर्हि पुरा जन्माभिषेकाधिकरणतया अधुना तु भगवतः पादस्पर्शनक्षमसिंहासनरूपेण च सेवा विधाय, विहाय च सुरासक्तिं, दोषाकरससर्गमनुदिनं पंकजातसहचरतया भ्राम्यतः स्वय वसुमतोऽपि सद्द्रविणमुमोषकस्य, भूमौ वर्तमानाना स्वर्णास्थितिं करैरपहररतः, तथा चरमाचलैयोगं प्राप्तस्याऽपि पूर्वाशीवशेन महोदयभूभृत्सेवा कुर्वतो जडबंधोः सख्य च परिहृत्य सकलभूधरश्रेष्ठता कल्याणसपदा जातरूपधरत्वेन भगवतः सौरूप्य च प्राप्तवानिति स्वयमपि भगवान्निकट एव

---

१ जिनप्रतिमाः।२ आतपास्थितिः, तपःस्थितिश्च। ३सुमेषुर्मदनः पक्षे सुमेषु पुष्पेषु।४ सालस्तटो वृक्षश्च। ५दुर्निवर्णधरः पक्षे रजताचलः। ६सुरायां आसक्तिः पक्षे देवासक्तिः। ७ दोषसमूहः पक्षे दोषा रात्रिं करोति इति दोषाकरश्चंद्रः। ८ पापसमूहः कमल च। ९ नक्षत्रसमूहकातिचोरस्य पक्षे सज्जननिकरधनहारकस्य। १० अस्तपर्वतसंग पक्षे चरमशुक्लध्यानसक्षम। ११ पूर्वदिग्वशेन पक्षे पूर्वेच्छावशेन। १२ महाविभवयुतनृपसेवा पक्षे महोदयाचलसेवा। १३ मूर्खबंधो समुद्रबंधोरित्यर्थः। १४ नृपः पर्वतश्च। १५ पंचकल्याणोत्सवाः सुवर्ण च। १६ नाग्न्यधरत्व सुवर्णधरत्व च।

सेवां विधातुमुदितमनीषया नूनमाकाशस्फटिकघटिततत्सालात्मना समजायन ॥

तन्मध्ये रेजिरे नूत्नरत्ना द्वादशकोष्ठकाः ।
गणैर्द्वादशभिर्जुष्टाश्चंद्रक्रांतप्रतिष्ठिताः ॥ ३४॥

ततः पर क्रमेण वैडूर्यहेमसर्वरत्नहेममयानां धर्मचक्रधरयक्षाधिष्ठितमहाध्वजमंगलद्रव्यसंगतप्रथमद्वितीयतृतीयपीठानामुपरि विराजमाने सुगंधिसुरकुसुमकालागरुधूपोद्दामसौरभपरिवेष्टिते जिनतनुबंधुरगंधसमिद्धे गंधकुटीमध्ये भ्राजमान माणिक्यदीपसरूप मणिमयसिंहासनमधिष्ठाय चतुरंगुलगगनतले देवश्चकासामास ॥

समवसरणभूमिं सारसौंदर्यभूमिं ।
बलरिपुमुखदेवा वीक्ष्य सद्भक्तिभावाः ॥
परिगतिमथ कृत्वा तत्सभांतश्च गत्वा ।
सपदि नयमुदारं भेजिरे हर्षपूरं ॥ ३५ ॥

तत्र किल विचित्रमणिगणघृणिरुचिरमसृणतलसुरगिरिशिखरसदृशविजितदिनकररुचिरुचिविसरभरभरितगगनतलविलसितविवृतवदनगजरिपुविधृतगरिष्ठविष्टरमधितिष्ठतमानदमंदरवृदारकसंदोहकरनिकरसमुन्मुक्तया, मुक्तयेव स्वच्छकांतिमनोरमया, मनोरमयेव वियन्मध्याविराजमानलक्ष्म्या, लक्ष्मीवाति चंचलया, चंचलयेव कलितघनपुष्पवृष्ट्या, वृष्टेयेव बहुधा मानसस्य समुल्लाससंपादनप्रवीणया,

---

१ प्रदक्षिणा । २ मुक्ताफलमिव । ३ वनितया । ४ वियदिव कटिविराजमानलक्ष्म्या । ५ विद्युतेव । ६ जलवृष्ट्या निविडपुष्पवृष्ट्या च । ७ प्रमाणयुक्तसस्योल्लासन, बहुधा चित्तस्य उल्लासन ॥

वीणयेव सपादितालिकुलमधुरस्वराश्रिया, मधुररवराश्रियेव सुरागोद्भूतिसुदर्या, सुदर्येव सकलकलया. कलयेव शीतरुचिविलसमानया, परागरुच्युज्ज्वलयाप्यपरागरुच्युज्ज्वलया, सुरागोद्भूतयामुराधिकरुचिकरतया सततसजातमधुपससर्गतया मधुरुचिरुचिरतया लतागीकृतप्रणयतया सदारामानुरक्ततया च मे बधनास्थितिरासीद्भगवतः सेवोन्मुख्यमात्रेण बधो मुक्त इति कुतुकेनाहमहमिकया स्वयमनुपतत्येव पुष्पवृष्टया शोभमान, देवस्य चित्तान्निष्कासितेन रागेणोपगूढस्य मरकतहरितदलविलसितमदकलमधुरविरुतमधुकरनिचयमुखरितमणिमयकुसुमविततकिसलयकुलविलसितस्य रक्ताशोकतरोर्मूलमुपाश्रित भुवनत्रयाधिपत्य प्रकटीकुर्वाणेन, हासेनेव त्रिजगल्लक्ष्म्याः, यशोमडलेनेव भगवतः, स्मितोल्लासेनेव धर्मनृपस्य, सेवार्थमुपागतेनेव चद्रबिंबेनाय किल विमुक्ताबरस्त्यक्तचचेलानद सदामरालिसतोषकरो विचित्रबलाहको धीरसस्यवृद्धिं करोतीति कुतुहलेन संद्रष्टुमुपागत्य विस्मयवशात्तत्रैव निश्चलतामुपगतेनेव शारदनीरदत्रयेण, चद्रे कलकोत्पादनेन, सूर्ये संतापसजनेन च संजातापकीर्ति परिमाष्टुं तदुभयमेकीकृत्य वेधसा निर्मितेनेव बिबत्रयेण रत्नकातिमनोहरेण धवलातपत्रत्रितयेन विशोभमानं, गांभीर्यविजितेन पय.पारावारेण पदरहिततयाधिकतरजरसाश्लिष्टतयातिवृद्धतया च सेवार्थ स्वयमागतुमक्षमतया

---

१ आलिकुलं सखीसमूहः पक्षे अलिकुल भ्रमरसमूहः । २ गाधारादिरागाः पक्षे कल्पवृक्षाः। ३ चद्रः पक्षे शीतकरत्वं। ४ कल्पतरुः पक्षे प्रेम। ५ सुरा मदिरा देवाश्च। ६ मधुपो भृगः मद्यपायी च। ७ सदारामानुरक्तः अनिश उपवनानुरक्तः पक्षे सदा ललनानुरक्तः। ८ अबर वस्त्र गगन च। ९ चंचलानंद विद्युता आनद. पक्षे अनिलं सुख।

प्रहितैरिव वीचिनिकरैर्यद्वा यशोविजिततया सेवार्थमागतैरिव सुधा-पूरैरथवा निखिलसुरसेव्यपादोऽय हिमालय इति मत्वानुपतद्भिरिव गंगातरंगैः, सुरनिकरवदनपयोजपरिष्कृते भगवतो विमलतरादिव्य-देहकांतिपूरे सरोवरशंकया सपतद्भिरिव हंसै, ईश्वरगुणतर्पीद्भिरिव यशोविसरैर्यक्षकरसरोजवीज्यमानचामरैरुपशोभमान, जिनचंद्रोदयवर्ध-मानपयोधिध्वनिमनुकुर्वता सुरदुंदुभिनिध्वानेन प्रकटितमहिमान, भव्य-जनसप्तभवावलोकनमणिमुकुरायमाणेनांतरारातिचक्रनिराकरणनिपुणच-क्रायुधायमानेन ज्ञानश्रीमणिदर्पणायमानेन यद्वा धवलातपत्ररूपेण-भगवतः सेवां विधाय कृतकृत्यतामापन्न चंद्रमवलोक्य स्वयमपि सेवाप्रेमागतेनेव प्रभाकरेण भामंडलेन वाभास्यमानादिव्यदेह, मृदुमधुरगंभीरसर्वभाषामयदिव्यध्वनिदिनकरेण भव्यजनमनोदुर्गध्वान्त विध्वंसयंत मूर्तेनेव ज्ञानदर्शनचारित्रत्रितयेनान्येन वदनत्रयेण परिशो-भमान त देवदेवमवलोक्य विस्मयविस्तृताक्षाः सहस्राक्षप्रमुखसुराध्य-क्षाः भक्त्या प्रणम्यार्चयित्वा चैव स्तोतुमारभत ॥

गुणश्रेणी देव ! त्रिभुवनपते ते गणधर—
प्रसिद्धप्रज्ञाणीनामपि न विषयाऽस्मत्स्तुतिगिरां ॥
कथं भूमिः सास्यादिह जलधियौर्वानलसुरैव—
रपेयं पातुं किं मशकशिशुकाली प्रभवति ॥ २६ ॥
क तावकगुणांबुधिः क मितशेमुषीका वय ।

---

१ सेव्यचरणः पक्षे सेव्यप्रत्यंतपर्वतः । २ हिमालयो गिरिः पक्षे हि-मालयः मायाः लक्ष्म्याः आलय इति । ३ चतुष्टयेनेति पाठांतर । ४ अस्मिन्विषये । ५ स्तोकमतयः ।

क नौ [illegible] खलु ते यशोमाधुरी ॥
इति स्तुतिपथाज्जिनाधिप ! निष्टार्तिभाज. पुनः ।
प्रवर्तयति देव ! नरस्तव पदाब्जभक्तिर्भुवा ॥ ३७ ॥
अलुप्त [illegible] सुमनोजीत त्व देवदेव ! भुवनपते ! ॥
सुम [illegible] न सहसा नाशयसि स्मोति जिनप ! चित्रमिद ॥३८॥
देव ! तव वैभवं यो जानाति पुमान् जिनेंद्र ! भुवनपते ॥
भजति त्यजति च वैभवमेष इति श्रीपते ! चित्रम् ॥३९॥
अमलसद्गुणवारिधिरप्यहो जिनप ! नामलसद्गुणवारिधिः ॥
निखिललोकनुतोप्यभवः कथं त्रिदशलोकनुतो जगतांपते !॥४०॥
अवदातमूर्तिमहितोप्यधिकारुण्यं वहस्यहो चित्रं ॥
व्याकीर्णकल्पकुसुमो न व्याकीर्णाद्विकल्पकुसुमोऽपि ॥ ४१ ॥
इत्याद्यनेकस्तोत्रपवित्रीकृतमुखारविंदः पुरन्दरप्रमुखवृंदारकसदोह· सततसगतनिजनयनपरंपराभिर्जिनराजस्य कनकामलदिव्यदेह चंचच्चरीकसंचयकल्पतरुकल्प कुर्वाणो भगवदभिमुखीकृतमुखो यथोचित· निषसाद ॥

---

१ देवसमूह विद्वत्समूह वा॥ २ मनसिजं मदनमित्यर्थः। ३ इत्यव्यय भव ससार पक्षे वैभव ऐश्वर्ये। ४ न अमलसद्गुणवारिधिरिति विरोधः तत्परिहारः नाम लसद्गुणवारिधिः । ५ निखिललोकनुतोऽपि त्रिदशनुत इति विरोधः त्रिदशादेवास्तैर्नुत इति परिहारः । ६ अवदातमूर्तिरपि श्वेतमूर्तिरपि अधिकारुण्य अधिकालोहितत्व वहसीति विरोधे अधि—कारुण्यं अतिशयेन सदयत्व इत्यर्थान्तरेण परिहारः । ७ व्याकीर्णद्विकल्पकसुमोऽपि प्रसारितकल्पतरुसुमद्वयोऽपि न व्याकीर्णकल्पकुसुम इति विरोधे तत्परिहार एव व्याकीर्ण-प्रसारिता द्विकल्पका द्विभेदा सुमा शोभना लक्ष्मीर्येन सः अनतज्ञानादि-रूपांतरगलक्ष्मीः अष्टप्रातिहार्यादिरूपा बहिरंगा लक्ष्मीरिति॥

श्रीमान्भरतराजर्षिर्बुबुधे युगपत्त्रयम्।
गुरोः कैवल्यसंभूतिं सूतिं च सुतचक्रयोः ॥४२॥
कैवल्यं वृषभस्य धार्मिकमुखात्सत्कंचुकीयात्सुतो-
त्पत्तिं चक्रसमुद्भवं च कलयन्द्राक् शस्त्रपालाद्विभुः।
किंचिद्व्याकुलमानसः किमिह मे प्राक्कार्यमित्यादरात् ।
तीर्थं धर्मफलं तदा भगवतः प्राग्पूं मतिं व्यातनोत् ॥४३॥

तदनु गुरुभक्तिभरनिरतो भरतराज कौतुकितहृदयैरनुजपुञ्जनपरिजनात.पुरपुरःसरैः परिवृतः, पटुपटहमद्रतमनिस्वानानिरुद्धदशादिशावकाशं प्रचलितमिवाम्भोधिं षडगंतरगितवलं पुरोधाय पुरतश्चालितः-पुरतः परिशोभमानमेकत्रयुगपदुदितदिनकरबिंबसहस्रसकाशकरं पुंजीभूतामिव कांतिसारं भगवदास्थानमडपं प्रवीक्ष्य प्रविश्य चांतः, क्रमेण प्रथमाद्वितीयसालावुत्क्रम्य, तत्र संभ्राम्यद्भिर्दौवारिकैः प्रवेशितः, त्रिदशभुवनसौभाग्याजित्वरीं श्रीमडपशोभावैखरीं विलोक्य विस्मितमानसः प्रदक्षिणीकृत्य प्रथमपीठे धर्मचक्रचतुष्टयं, द्वितीयपीठे महान्वजाश्चार्चयित्वा, गंधकुटीमध्यसमिद्धसिंहासनोपरि विराजमानतया पूर्वाचलशिखरशोशुम्यमानं दिनमणिमनुकुर्वाणं, चलच्चामरनिकरवीज्यमानतया पुष्पवृष्टिपरीतया च प्रपतन्निर्झरं त्रिधाभूतविधुबिंबावलवितावुधरचुंबितं मंदारतरुगलितप्रसूनपरिमेदुरं मंदरगिरिं तुलयन्तं भगवतमवलोक्य प्रणम्य चातिविभवेन पूजयामास ॥

पूजांते देवदेवं त्रिभुवनतिलकं संप्रणम्यातिभक्त्या ।
स्तुत्वा नत्वा च भूयः सकलगुणनिधिं विश्वयाथात्म्यबोधं ॥
गत्वा श्रीमंडपाग्र्यं भरतनरपतिस्तत्र सभ्यांतराले ।

देवांगे दत्तदृष्टिर्मुकुलितविलसत्पाणिपद्मोऽवतस्थे ॥ ४४ ॥

तदनु भव्यपुंडरीकषंडमार्तंड केवलज्ञानलक्ष्मीमनुभवन्तं भगवत धर्मं पृष्टवति भरतराजे, भूतभविष्यद्वर्तमानपदार्थसार्थव्यक्तीकरणसाक्षिणी निर्मुक्ताशेषदोषा मिथ्यात्वजालतूलवातूलेलीला विपक्षगर्वसर्वस्वपर्वतदंभोलिरपारससारसागरकर्णधारायमाणा स्याद्वादलक्ष्मीविहरणप्रासादपाली धर्मनृपसाम्राज्यप्रतिष्ठाभूमिस्तात्वोष्ठस्पदादिवर्जिता वर्णविन्यासहिताऽपि वस्तुबोधविधानचतुरा स्वयमेकापि पृथक्पृथगभिप्राय वचनाना देहिना स्पष्टमिष्टार्थसाधनप्रवीणा सुधामयी वृष्टिरिव दिव्यवाणी भगवन्मुखारविंदात्प्रादुर्बभूव ॥

निशम्य भरताधिपो मधुरदिव्यवाणीं विभो—
रतदाभजत दर्शनव्रतविशुद्धिमुद्यद्रुचिः ॥
सुरासुरमुनीश्वरप्रभृतिभि· परीता सभा—
परां धृतिमवाप सा परमशर्मधर्मामृतैः ॥ ४५ ॥

तदानीं कुरुकुलचूडामणिः सोमप्रभनरमणिर्दानतीर्थप्रवर्तकः श्रेयान् भरतेश्वरानुजो वृषभसेनश्च भगवत्पादमूले दीक्षित्वा गणधरा बभूवुः ।

ब्राह्मीसुदर्यौ च संसारनिर्वेदानिर्धूनविवाहार्चिते भट्टारकपादमूले दीक्षामासाद्य गणिनीगणप्रधाने बभूवतुः ॥

श्रुतकीर्तिश्च गृहीतोपासकव्रतः श्रावकाग्रणीर्बभूव । प्रियव्रता च गृहीताणुव्रता श्राविकाग्रेसरी बभूव ॥

पुरा भग्नतपस्काः कच्छमहाकच्छप्रमुखाश्च भरतराजपुत्र मरीचिं विना सर्वेऽपि महाप्राव्राज्यमासेदुः । अनंतवीर्यश्च गुरुपादमूलप्राप्तदीक्षः

---

१ वायुः । २ नाविकः । ३ सतोषः ।

सुरासुरैः पूजितो मोक्षलक्ष्मीमाससाद ।

वंदित्वा भरताधिपो भगवतः पादांबुजं सानुज-
स्तच्चक्रायुधपूजने कृतमतिः संपूज्य लोकेश्वरं ॥
आस्थानाद्बहिरागतः पृतनया जुष्टश्च सौधोल्लसत्-
केतुव्रातनिरस्तभास्करकरं नैजं पुरं प्राविशत् ॥४६॥

तदनु देवदेव! त्रिभुवनरक्षणाविचक्षण! पापावग्रहविशेषविशोषितभव्यसस्यसमुल्लासक! धर्मामृतसेकाय दयाध्वजविराजमाना भव्यवल्लाथिनीं जयोद्योगसाधन सज्जधर्मचक्रं च पुरस्कृत्य मुक्तिमार्गावस्कंदननिपुणाया मोहपृतनाया निःशेषनिर्मूलनाय च कालोऽयमुपस्थित इति साविनय पुरुहूतेन विज्ञापितस्तीर्थंकरपुण्यसारथिबोधित., समीरकुमारसमार्जितयोजनांतररम्यभूमागः स्तनितसुरविरचितविमलसुरभिसलिलसंसेकविरहितरज.प्रमरमहीतलः, सकलर्तुकुसुमपल्लवितसमुल्लसितवल्लिकामतल्लिकाफलविलसिततरुनिकरनिरतरितमणिदर्पणप्रतिमावनीतलविलासः समनुस्रुतशिशिरसुरभिमंदानिल. परस्पराह्वाननिरतदिविजजनानिनदपूरितगगनतलः, पुरस्कृताष्टमगलसंगतध्वजमालावितानावीचित्रितांबर सहस्रदिनकरस्पर्द्धिसहस्रारधर्मचक्रपुरःसरः, पृष्ठतश्च व्योमतलविन्यस्त सप्तसप्तहेमांबुजरुचिरंजितचरणयुगलतया विजितेन रागमल्लेन भयादुपाश्रितपद इव नभःस्थले कलितयानः सकलजगदानंदनः जिनराजः सर्वदेशेषु विहरमाणः क्रमेणानुकृतनिजयशोलिलि कैलासशैलमुपजगाम ।

॥ इति श्रीमदर्हद्दासकृतौ पुरुदेवचंपूप्रबंधेऽष्टमःस्तबकः ॥

---

१ अवग्रहो वृष्टिप्रतिबंधः । २ आक्रमण । ३ मेघकुमारः । ४ मल्लयुद्ध कुर्वाणेन ।




चक्रे चक्रस्य पूजां तदनु निधिपतिर्जातकर्मापि सूनोः ।
पुंजीभूतानि रत्नान्युरुतरकुतुकादर्थिनां संददानः ॥
यत्र स्वःपारिजातावलिरधिकमदोन्मत्तभूपारिजात— ।
श्रेणी च व्रीडशोकावभजत युगपद्गीतवेलोत्सवाग्रे ॥ १ ॥

तनश्चक्रधरस्यास्य दिग्जयारंभसंभ्रमे ॥
उपतस्थे शरल्लक्ष्मीर्जयश्रीरिव सादरा ॥ २ ॥

विशालवियदंबरस्फुटपयोधरोद्यन्मरु— ।
च्छरासननखक्षता मधुकरालिनीलालका ॥
वियत्तल्पतत्सिच्छदपरंपराकंठिका ।
शशांकविलसन्मुखी शरदराजतांभोजदृक् ॥ ३ ॥

तदानीं विकचकंजपुंजकिंजल्कपिंजरया कनककलितमणिबद्धश-रल्लक्ष्मीकंठिकयेव, मदमत्तमदनगजसंत्रुटितसुवर्णशृंखलयेव, मधुकरप-रपरया विराजमाने, मनसिजमदगजमदवारिसौरभशंकाकरसप्तच्छदप-रिमलपरिमिलितदिगंतरे, गगनतललक्ष्मीवक्षःस्थलविलसितहारिन्माणिक-ठिकानुकारिणीभिर्निरावरणं प्रकाशमान विकर्तन निजपितरमुपसेवितु-

१ स्वर्गीयाना पारिजातनामधारिणा कल्पतरूणा पंक्तिः। 'पचैते देवतरवो मंदारः पारिजातकः । संतानः कल्पवृक्षश्च पुंसि वा हरिचंदन॥ इत्यमरः। २ भूप—अरिजातश्रेणी । भूपारिजातश्रेणी शत्रुराजश्रेणी भूम्युत्पन्नकल्पवृक्षश्रेणी च । ३—४ स्वर्गकल्पतरवो लज्जा । शत्रुभूपाश्च शोकमभजत । ५ अंबरं वस्त्रं नभश्च । ६ पयोधरः मेघः कुचश्च।७ हंसः । ८ कंजं कमलं ।९ सूर्यः।

मागतायाः कलिंदगिरिनंदिन्याः परितः प्रसृताभिरिव वीचिपरंपराभिः सुरगजोन्मूलितनिर्गलदाकाशगंगाकमलिनीमिव, दर्शयंतीभिर्दिनकररथ तुरगतनुप्रभानुलिप्तश्याममिव गगनतलमुत्पादयंतीभिः संचारिणीमिव मरकतस्थलीं विडंबयतीभिरंतरीक्षाकुपारशैवालावलिमिव स्मारयतीभिर्गगनतलवितते: पक्षपुटैः कदलीदलैरिव दिवसकरखरकिरणपरिखेदिता न्याशामुखानि वीजयतीभिर्वियति संचारिणीं शाद्वलमालामिवाचरतीभिः शुकराजिभिर्दंतुरिततारापथे पंफुल्यमानमल्लिकामतल्लिकाजाले तस्मिन् शरत्काले रचितदिग्जयोद्योगो भरतराजः पुरस्कृतचक्रायुधः प्रस्थानभेरीभांकारैर्घनरतनितशंकया कलापिकलापमुन्नमय्य विदधानैर्दिगंतराणि पूरयामास ॥

दृप्तारातिमदेभकेसरिरवस्तत्सैन्यवीरावली ।
केकिव्रातघनारवस्त्रिभुवनाभोगे नटन्त्याश्चिरं ॥
उद्यच्चक्रधरस्य कीर्तिसुदृशो मंजीरशिंजारवो ॥
व्योमाध्वन्युदियाय मंढाविजयप्रस्थानभेरीरवः ॥ ४ ॥
उद्यन्मंद्रजयानकध्वानिभरः संत्रस्तदिक्कुंभिराट् ।
फिट्कारैः कुलभूधराग्रिमगुहासंलुप्तपञ्चोद्विषां ॥
कोपोद्बुद्धवतां च गर्जितरवैर्जुष्टो दिशो जेप्यत-
श्चक्रेशात्प्रथमं दिगंतवलयान्याक्रांतवांस्तत्क्षणम् ॥५॥

तदानीमुदारपराक्रमश्चक्रधरः शत्रुबलजलविशोषणवडवाग्निकल्पेन मूर्तेनेव प्रतापपुंजेन सुदर्शननाम्ना चक्ररत्नेन, विचित्रमणिमयूखचित्रितेन सूर्यप्रभनाम्ना छत्ररत्नेन, समुत्खातमात्रविस्तसमस्त-

---

१ यमुनानदी । २ नभोम्बुविः

रिपुमंडलेन वीरलक्ष्मीकर्णपूरनीलेंदीवरश्यामलेन सौनंदकनाम्ना खड्गरत्नेन, विजयार्धगिरिगुहागव्हरवज्रकवाटपुटविघटनपटुना चंडवेगनाम्ना दंडरत्नेन, अतिविषमजलदुर्गसमुत्तरणनिरतसकलशिबिरसंधारणधुरीणवज्रमयचर्मरत्नेन, चक्रवर्तिमणिमुकुटशिखरायमाणचूडामणिनाममणिरत्नेन, महागुहागव्हरांतरसूचिभेद्यतमस्ततिनिरसनप्रभाप्रभूतगुणोपेतेन चिंताजननीनामधेयेन काकिणीरत्नेन, नामग्रहणमात्रेणान्तर्निहितसमस्तवस्तुसमर्पणप्रवणकामवृष्टिनामगृहपतिरत्नेन, अतिपराक्रमशालिना षड्विधसेनापालनपरायणेन अयोध्यनाम्ना सेनापतिरत्नेन, अनुस्मरणमात्रानिर्वर्तितसप्ततलादिप्रासादप्रकरेण, भद्रमुखनाम्ना तक्षकरत्नेन, शांतिपौष्टिकादिक्रियाकुशलधर्मकार्याधिकृतेन बुद्धिसागरनामधेयेन पुरोहितरत्नेन, कामरूपिणा कामचारिणा विजयार्धपर्वताभिधानेन यागहस्तिरत्नेन, विजितपवनवेगेन द्वादशयोजनोल्लंघनरहोनिवासभूतेन पवनंजयविख्याततुरगरत्नेन मनोहरस्त्रीरत्नेन च प्रत्येक सहस्रयक्षयक्षीरक्षितेन यथोचितमनुगम्यमान. शारदनीरदानुकारिविमलदुकूलःचंद्रातपपाण्डुरहरिचंदनानुलिप्तशरीर. स्फुरन्मल्लिकामालापरिष्कृतमुकुटतटरतातरलमुक्ताफलकलिताजानुविलंबिब्रह्मसूत्रो जयलक्ष्मीपरिणयमंगलमणिमयदीपायमानकौस्तुभमणिघृणिभासुरवक्ष.स्थलः समुद्दंडभुजदंडवास्तव्यचंचलराजलक्ष्मीकनकनिगलशंकाकरांगदशोभित सुरचापविलासोपहासिरुंद्रैर्द्रुच्छंदहाराभिरामो निजस्थपतिरत्ननिर्मित मन.पवनपत्रिपत्रिपतिचतुष्टयत्रिजयमजातकीर्तिपुंजैरिव चतुर्भि. शशिश्वेतैर्वाजिभिर्योजित स्यंदनमारूढ.मार्दमद्रजयदुंदुभिध्वानपुर सरजयघोषैः पुरंध्रिकाजनमंगलगीतमंगतगुरुजनाशीर्वचनैश्च पूरितनभःस्थलो वारना-

रीकरचलितचामरनिकरदंभसंभूतजयलक्ष्मीकटाक्षक्षीरार्णवः परितो रथा-रूढैर्महामुकुटबद्धैः परिवृतश्चलितेनेवापरसागरेण बलेन शबलितपुरोभागो दूरादेव प्रणतमस्तकैः सेनाध्यक्षैः प्रतिपाल्यमानवीक्षणावसरः शनै राजमंदिरान्निर्याय चंचत्पचतोरणालंकृतासु रथ्यासु प्रविशमानो मनुवंशगगनतलोदितभरतचंद्रकांतिचंद्रिकाक्षुभितनगरक्षीरवाराशिवीचिपरंपरानुकारि-सौधावलनिपुरानितंबिनीजनपरिमुक्तापागशर्करानिकरमेदुरसाक्षतलाजमौक्तिकदंतुरितसाविवप्रदेशः पुरान्निश्चक्राम ॥

क्ष्माभृत्प्रोत्तुंगसिंदूरितकरटिघटाडंबरैः कुंकुमाभ—
त्वंगत्प्रोद्यत्तुरंगै रथिकवरचयैश्चारुचित्रांबरेद्धैः ॥
भानुमस्पर्द्धिचक्रप्रतिफलनलसद्धेतिहस्तैः पदाति—
व्रातैश्चक्रिप्रतापांबुधिरिव चलितस्तद्बलौघो बभासे ॥६॥

बलाघातोद्गीर्णाक्षितितलगलद्धूलिनिकरे ।
नभोभागे तन्वत्यविरलपयोदालितुलनाम् ॥
पदातिव्रातानां करतलचलत्खड्गलतिका ।
वितेनुः प्रागल्भ्यं प्रतिदिशिचलानेकतडितां ॥ ७ ॥

दिशायुवतिकीर्णसत्सुपटवासचूर्णोऽथवा ।
जगत्कमलवासिनीप्रमदमुष्टिपिष्टातंक ॥
अमानि बहुधा सुरैः सदनसंगिपौरांगना—
वशीकरणचूर्ण इत्यमितसैन्यरेणूत्करः ॥ ८ ॥

तदा किल प्रचालितप्रलयजलधिशंकाकरे चक्रधरसैन्ये पुरःसरसेनापति-

१ गजसमूहः २ जगद्रूपे कमले निवासशीला लक्ष्मीः ३ सुगंधिचूर्ण-विशेषः । ४ मन्यते स्म ।

पुरस्कृतदद्दरत्नसमीकृततया राजपथायमाने मार्गे प्रभास्वरपुर.मरचक्र-रत्नानुसारेण प्राङ्मुखप्रचलिते सकलमपि महीतलं चतुरंगमय, अशेष-दिङ्मंडलं रजोमयं, नभ.स्थल च दिविजविद्याधरमय अतरीक्षं चातपत्र-मयं, मर्मरिकुलं च मदगधमय, भुवनोदरं च जयजीवेत्यादिघोषमय-माविरास ॥

ततः सैन्यैः साकं विततपथमुल्लंघ्य भरत—॥
क्षितीशः सोऽद्राक्षीत्पुलिनजघनां पद्मनयनां ॥
मुदा गगां सद्यस्तनकमलकोशां घनरसं—
स्फुरद्रूपां वेणीकलितघनपुष्पां सुरुचिरां ॥ ८ ॥
व्यापारितदृशं तत्र विलोक्य पृथिवीपतिं ॥
स्फारधीर्वाचामित्यूचे सारथिश्चित्तरंजनम् ॥ ९ ॥
अप्रदानैकशीलापि स्वर्णस्तोमप्रदायिनी ॥
सवेगगमनाप्येषा चित्रं हंसस्फुरद्गतिः ॥ १० ॥
इयं सुकमला पद्मराजीलोपाश्रितापि च ॥
सरसत्वं गताप्येषा नीरसत्वमुपैत्यहो ॥ ११ ॥

---

१ पुलिनमेव जघनं यस्या. २ पद्मान्येव नयनस्थानीयानि यस्याः। ३ नूतनकमलकोशः पक्षे सद्य. स्तनौ कमलकोशाविव यस्याः । ४ जल पक्षे निबिडः शृंगारादिरसः ।५वेणी प्रवाह ।६ सान्द्रकुसुमा।पक्षे कबरी, जलं च। ७ अत्यागशीला पक्षे जलप्रदानशीला । ८ सुअर्णप्रदायिनी जलप्रदानशीला पक्षे स्वर्णस्तोमप्रदायिनी हेमसमूहदानशीला । ९–१० वेगयुक्तगमनापि हंसगतिरिति चित्र। परिहारः–हंसैः स्फुरन्ती शोभमाना गतिर्यस्या।११–१२ सुकमलापि पद्मसमूहलोपयुतेति विरोध. । परिहारः–राजीलो जलसर्पः तेन आश्रिता इति । १३–१४ सरसापि नीरसेति विरोधः । परिहारः–मधुरर-सोपेता जलसत्वोपयुक्ता च ।

इति सारथिवचनं श्रवणदेशे विदधानः प्रकृष्टतररथवेगापरिज्ञानबहु-दूराध्वलघनश्चक्रधराश्चिरविरहमसहमानतया स्वयमनुयातामिव साकेत-पुरीं पटमंदिरपालिं प्राविश्य तत्र दिनमतिवाह्यान्येद्युरपरमिव विज-याधाचल तन्नामधेय सिंधुरमाधिरूढः प्रचलितपरमकरवालयातिशायित-सिंधुरयोज्ज्वलया बहुलहरिजालकोलाहलमुखरितदिगंतरया षडंगवाहि-न्या गंगावाहिन्या चानुगम्यमानः प्रतिदेशमुपनीतप्राभृतजालान्नरपाः लान्प्रतिवनं चमरीवालकस्तूरिकाडहस्तिमस्तकोद्भूतमुक्ताफलादिकमुपः दीकुर्वाणान् शबराधरारमणाश्च यथार्हं संभावयन्गंगाद्वारमुपजगाम ॥

बहिः पारावारं भरततृपतिर्द्वैप्यसलिलं ।
मुदा पश्यंस्तत्र स्थलपथगतः सैन्यसहितः ॥
विशन्वेदीद्वारं ततसुरतटिन्यास्तटवने ॥
निवेशं सेनायाः समनतुत सन्मंदपवने ॥ १२ ॥

तदनु लवणजलधिजयोद्युक्तस्त्रिरात्रपोषित. सादरमाधिवासितजैत्रास्त्र-संततमंत्रानुचिंतनपरतंत्रः पावन दर्भशयनमधिशयान पुरोधस पुरस्कृत्य विहितपरमेष्ठिपूज सेनारक्षणाय सेनान्य नियोज्य जलस्थलविलंघनज्ञ घालैर्वाजिभिर्योजितमजितजयनामधेयं दिव्यास्त्रसंभृतरथमाधिरूढ-पुरोहितावीहितपुण्याशीर्वचन शिरसा प्रतिगृण्हानो गंगाद्वारेण प्रस्थाय मनोजवैर्वाहैरुह्यमानेनाधिजल यानपात्रायमानेन द्वादशयोजनमवगाह्य रथांगपाणि· कोपेन कुंडलीकृतवज्रकाडकोदंडो निजप्रशस्तिपरिकल्पित-ममोघं शरमारोपयामास ॥

किमेषः पाथोधिः क्षुभित इह कल्पांतपवनै—

---

१ डेरा इति महाराष्ट्र भाषाया ।२ उपायनसमूहान् । ३ द्वीपसवांधे ।

रहो निर्घातः किं स्फुटविकटघोराट्टहसितः॥
इति त्रासात्सभ्यैरनधिगतरूपोऽथ स शरः।
सभामध्येऽपप्तद्धिभ्रविलसन्मागधपतेः ॥ १३ ॥

तदनु तत्पराभवासहिष्णुतया क्रोधाधः स मागधः क्रोधाग्नेरिधनायमानमेन सायकं विचूर्णयेत्याज्ञसभटानिकरस्ततः प्रथितमतिकौशलैरभ्यर्णगतसुरैरयं चक्रधरशरो गंधाक्षतादिभिरभ्यर्चनीयः स चक्रभृतामाद्यस्त्रिभुवनगुरुतनयो भरतराजः शरार्पणदानादिना पूजनीय इति प्रतिबोधितः प्रशांतक्रोधः प्रसन्नचित्तवृत्तिः सुरैः सह प्रस्थितो मणिकिरीटमरीचिविचित्रितगगनतलः शरं रत्नपटलानिवेशितं पुरोधायासाद्य च चक्रपाणिमिमां वाणीं सविनयमभाणीत् ॥

पुरा लब्धं पुण्यं परिणतमयं मे सुदिवसः।
भवान्यस्मादस्मन्नयनपथपांथः समभवत् ॥
इदानीमस्माकं मिलित इव सर्वोत्सवगुणो।
भवत्संगानंदो विवशयति पापं च नुदते ॥ १४ ॥
त्रिभुवनगुरुर्यस्य श्रीमान्पिता सकलेष्टदः
सुरनरमुखाः सर्वे यस्यानुशास्तिमुपासते ॥
नव च निधयो रत्नानि यस्य च तस्य ते ॥
सुलभमुपदीकर्तुं लज्जां तनोति मनो मम ॥ १५ ॥
अथापि रत्नान्येतानि स्वर्गेऽप्यसुलभानि च ॥
अधो निधीनामाधातुं सोपयोगानि संतु ते ॥ १६ ॥

इति शुक्तिवेणुवराहवारणादिष्वनुद्भूतैरक्षरमौक्तिकैर्घटिता वचनमालां

---

१ मेघध्वनिः।

रत्नमाला च कर्णदेशे कंठदेशे च समर्प्य, मणिकुंडलमहार्घरत्नादिभिः चक्रधरमभ्यर्च्य तेन कलितसत्कारो मागधसुरो निजास्पदमाससाद ॥

तुरंगैर्धौतांगैर्जलधिजलसंक्षालनवशा—
न्मनोवेगैर्जुष्टं रथमुपगतोऽयं निधिपतिः ॥
महीशानां पाथोनिधितटजुषां विस्मयकरो ।
विजेता स प्रापन्निजशिबिरमुद्वेलमहिमा ॥१७॥

तदनु चक्रधरो दक्षिणाशाविजयपरायणः कलितभगवत्सपर्यो-निखिलदिग्विजृंभमाणप्रयाणमंगलानकरवभरकंपितपरचक्रः समुच्चलि-तबहलबलधूलिपटलपिहितरिपुनृपतिनगरः सागरोपसागरयोर्मध्ये प्रचलता तृतीयेनेव सागरेण षडंगशबलेन सह प्रस्थितो विविधान्देशानतीत्य, विलसदेलालतामनोहरे वेलावने सेनां निवेश्य, प्रविश्य च पूर्ववद्वैजयंतमहाद्वारेण लवणोदधिव्यंतराधीश्वरं वरतनुं निर्जित्य, पुनः समुद्रोपसमुद्रयोर्मध्ये सेनया सह प्रस्थितः, चंदननालिकेरताम्बूलवल्लीप्रचुरप्रदेशान्विविधान्देशा-नतीत्य, सिंधुद्वारोपान्तविराजमाने कल्लोलिनीविटानिलोलकल्लोलांदोलित-वनदेवतालीलाडोलानुकारितावल्लीलतापेशले मनसिजविजयप्रशस्तिलेख-नोचितपत्रविचित्रितश्रीताले वने ध्वजिनीं विनिवेश्य, प्रविश्य च सिंधु-मर्णवमिव मन्यमानः पूर्ववद्व्यतरपतिं प्रभासं च निर्जिगाय ॥

निधीशे कौबेरीं दिशमथ विजेतुं प्रचलिते ।
प्रविष्टाः पश्चार्द्धैरतिजवधुरीणानि सहसा ॥
रजोराज्या भूम्नामनुमितखुराघट्टनकलाः ।

---

१ महालवणोदधिः । २ क्षुल्लकलवणोदधिः । ३ सागरः । ४ सेना । ५ कृपमित्र । ६ उत्तर ।

हयाश्वेलुहेंषारवदलितादिग्भित्तिपटला ॥ १८ ॥

तदानीं कर्णतालविगालितपटुपवनसमाकृष्टस्वरगणतरंगिणीतरंगजलकणैः शुंडादंडसमूतफूत्कारशीकरैश्च व्योमलक्ष्म्या वसुधायाश्चान्योन्यमंजातव्यात्युक्षिकाविभ्रम विदधानया, प्लावयत्येव मदधाराभिर्भुवमाकर्षयन्त्येव दिक्चक्रवालं, संक्षोभयन्त्येव भुवनोदरमुद्विग्नयंत्येव दिग्गजानुपरूंधयत्येव पद्मबंधुगतं जंगमयेव धराधरपरंपरया भूतलमवतीर्णयेव कादंबिन्या गजघटया सहेलमस्पंदत ॥

एवं प्रस्थाय सैन्ये निजचरणनतोदीच्यभूपालवृंदं ।
संप्राप्त रौप्यभूमीधरनिकटतटे कृप्तसेनानिवेशं ॥
श्रीमंतं चक्रपाणिं नियमयुतमथो राजताद्रेरधीशो
देवः संद्रष्टुमागान्मणिमुकुटरुचिद्योतिताशांतरालः ॥ १९ ॥
नतः सुरः ससत्कारं चक्रिणा धुरि कल्पितं
भद्रासनमलंकुर्वन्नुवाच वदतांवरः ॥ २० ॥
विजयार्धगिरेरहं नियंता विजयार्धोऽस्मि वनामरः प्रभो ! ।
परवान् भवतो नृप ! त्वदाज्ञा मम मौलेः शिखरे महीयते ॥ २१ ॥
वक्त्रे दोषाकरश्रीर्दृशि जडजरुचिः सूनलक्ष्मीश्च हासे ।
शक्तिर्निस्त्रिंशजेय भुजभुवि कुटिला चापयष्टि करे ते ॥
आज्ञेयं सर्वदा श्रीभरतनरपते वृद्धया किं मयात्रे ।
त्येवं प्रोच्य प्रकोपात्सुरपतिनगरं प्राप कीर्तिस्त्वदीया ॥ २२ ॥

---

१ सूर्यगत । २ चंद्रश्रीः । ३ कमलरुचि डलयोरभेद. । ४ सुसम्यक् ऊन-लक्ष्मीः पुष्पलक्ष्मीश्च । ५ निस्त्रिंशो घातकः क्रूर. । ६ अतिशयेन वैपुल्य-प्राप्तया पक्षे अतिजरया ।

इत्यभिधायोत्थाय च चक्रधरं सुरैः सह तीर्थाम्बुभिरतिविभवेन-अभिषिच्य, स व्यंतरपतिस्तस्मै दिव्यानि रत्नभृंगारश्वेतातपत्रप्रकीर्णकैयुगहरिविष्टराणि प्रतिपाद्यासाद्य च तदनुज्ञां निजसदनमाससाद ॥

विजयार्धगिरौ जिते समस्ते विजितं दक्षिणभारतं स जानन् ॥
निधिराङ्वितनान चक्रपूजां जलगंधाक्षतपुष्पधूपदीपैः ॥ २३ ॥

तदनु उत्तरार्धविजयाशसया प्रतीपमागत्य रजतगिरिपश्चिमगुहाभ्यर्णविलसमाने वने कलितसेनानिवेशं निधीशं नानादेशसमागतनरपालनिकायनिचितसविधप्रदेश परिवृतामरजालः कृतमालो नाम सुरः सप्रणाममागत्य प्रभुणा सबहुमानमर्पितासन. सादरमिमा गिरमुदाजहार ॥

देव ! त्वद्वीक्षणाद्भूतं वाचाटयति कौतुकं ॥
मतिश्च क्षुद्रयत्यद्य वाचमेनां करोमि किं ॥ २४ ॥

तथाहि—अपि कुशलमिति सकलभुवनकुशलवितरणधुरीणे त्वयि लज्जाकर। जयेति कलितजयश्रीपाणिग्रहणे सिद्धसाधन। दयस्वेति करुणावरुणालये न चमत्कारि। प्रसीदेति प्रसन्नस्वभावे न विधेय। स्वागतमित्यभ्यागत विषय परिपालयेति प्रभुमात्रगोचर। तव किं करोऽहमिति सुरनरविनुतचरणनलिने नातिशयावहमिति श्रीमदुचितवचनचातुरी च न मे बुद्धिमाविरोहति।

विद्धि मां विजयार्धस्य सर्वज्ञममृताशनं ॥
कृतमालं गिरेरस्य कूटेऽमुष्मिन्कृतालयं ॥ २५ ॥

इत्यादि वदतमुपदीकृतचतुर्दशभूषणं प्रतिपादिततद्गिरिगुहाद्वार प्रवेशोपायमादितेयं सबहुमान विसर्ज्य प्रसन्नेन चक्रधरेण गुहाद्वारमु-

१ चामरयुग्म २ अभिप्रायेण।

त्पाट्य यावत्तदुपशमनं तावत्पाश्चात्यखंडं विजयस्वेति आज्ञसश्चमूपतिरधिरूढवाजिरत्नः पुरस्कृतदंडरत्नः तद्गुहाद्वारमासाद्य निर्भिद्य च दंडरत्नेन तन्मुखनिसृतोष्मज्वालाकलापादश्वरत्नरयेण सुरनिकरेण च रक्षितो बभूव ॥

निपेतुरमरस्त्रीणां कटाक्षैः सामसंवराद् ॥
सुमनःप्रकरास्तत्रैऽस्मिन् हारा इव जयश्रियः ॥ २६ ॥

तदनु चमूपतिः सकलबलपरिवृतो विजयार्धगिरितटवेदिकामतीत्य सिंधुनदीपश्चिमदिग्भागवेदिकातोरणद्वारेण निर्गत्य म्लेच्छखंडमंडनायमानविविधाकरपुरग्रामसीमारामादिषु विगाह्य प्रतिष्ठापितचक्रवर्तिशासनः समागतम्लेच्छभूपालान् पुरस्कृत्य तिःपरीत्य च म्लेच्छखंडं म्लेच्छराजसेनया निर्याय पर्याणातीतसिंधुवनवेदिकाद्वारः षण्मासैः प्रशातोष्मदुःख तद्गुहामुखं पुनरासाद्य संशोध्य च कृतरक्षाविधिश्च चक्रधरदर्शनलालसः प्रविश्य विजयाशिविरं तत्र विचित्रचक्रवल्लभास्थानमंडपे दूरानतमणिमुकुटः कारिहारिकन्यारत्नप्रमुखवस्तुवाहनपुरःसरं कोटीरकोटिचुंबितधरणीतलं म्लेच्छराजकदंबकं तत्तेद्दशनामगोत्रादिनिर्देशेन प्रभवे निवेदयामास ॥

ततो भरतभूपतिः सबहुमानमेतान्नृपान् ।
विसर्ज्य नरपालकार्चितमुदारवीर्याकरं ॥
षडंगबलवल्लभं विजयचिन्हितैर्मानयन् ।
जयाय पुनरादिशन्निखिलवीरचूडामणिं ॥ २७ ॥
तदा जयानकध्वाना आचांतांभोधिघोषणाः[१] ॥

---

१ तिरस्कृतसागररवाः ।

अनुचक्रुर्महाघोरकल्पांताभोदगर्जितम् ॥ २८ ॥
जयकुंजरमारूढः परितो नृपकुंजरैः ॥
रेजे निर्यन्प्रयाणाय सम्राट् शक्र इवामरैः ॥ २९ ॥

तदनु भरतमहीपतिर्विजयरामापरिणयमहसमयहरित्पतिकरविकीर्ण-पिष्टातकचूर्णायमानरजःपटलेन, दिगंगनाहस्तविक्षिप्तलाजांजलिपुंज-प्रतिपंक्तिकरमदकारिकरशीकरनिकरेण, रयाविजितपवनपुरःसमर्पितमौ-क्तिकस्तवकोपहारशंकाकरतुरगमुखगलितफेनपल्लवनिचयेन च भरितग-गनतलं षडंगबलं विजयार्धाचलकटकाभिमुखं निर्याय पर्यायेण प्रविश्य च गुहाद्वारं, चक्रधरनिदेशपरवशचमूपतिपुरोहितपरिकल्पिताभ्या भित्तिद्वयसंक्रातसोमसूर्यमंडलसकाशाभ्यां काकिणीमणिरत्नाभ्यां निरा-कृतसूचीभेद्यांधतमसे तमिस्रनामगुहामध्ये सिंधुनदीतटयोर्द्विधाविगाह-मानं कैश्चित्प्रयाणैर्गुहार्धसमिता भूमीमतीत्य व्यतीत्य चाधःपतनशक्ति-युक्तया निमग्नजलया निमग्नया समं तिर्यक्प्रविष्टामुत्प्लावनशक्तिजुष्टामु-न्मग्नजलां तटिनीं स्थपतिरत्नपरिकल्पित सारदारुरचितसेतुना कौतुकहे-तुना ततः कतिपयप्रयाणैर्गिरिदुर्गं विलंघ्य व्यतीत्य च पुरःमरमदसिं-धुरनिरर्गलीकृतमदगुहाद्वारं सुरभितमंदमदवलमानपवमानसेवनव्यपगत चिरपरिचितगुहोष्मखेदं तस्य सानुमतस्तटवनमध्युवास ॥

तुरंगमखुराहतिक्षितिरजःपरीतांबरं ॥
करेणुयुतवारणैस्त्रुटितसल्लकीपल्लवं ॥
इदं वनमुदारधीरथ विलोक्य चक्रेश्वरो ॥
विचित्रितहृदंतरः शिबिरमध्युवासामलं ॥ ३० ॥

---

१ कल्पांत मेघरव । २ बुद्धि । ३ नद्या ।

पूर्वंवत्पश्चिमे खंडे चलाग्रण्या प्रसाधिते ॥
विजेतुं मध्यमं खंडं साधनैः प्रभुरुद्ययौ ॥ ३१ ॥

तदानीं परचक्रकलितं स्वचक्रपराभवमसहमानौ प्रस्थानभेरीभांकारपूरितदिगंतरौ कुंडलीकृतकोदंडमंडलमध्यविराजमानकोपारुणवदनतया परिवेषमध्यविलसितपद्मबंधुबिंबं तुलयतौ धनुर्धरहास्तिकाश्वीयमेदुरां ध्वजिनीं पुरस्कृत्य युद्धाय प्रचलितौ चलितावर्तविख्यातौ म्लेच्छभूपालौ धीमतामग्रेसरैः साचिववरैर्बोधितारातिविजयोपायतया निषिद्धाभिषेण नौशात्रवपराजयाय मेघमुखविख्यातान्नागवर्हिर्मुखान्नमस्कृत्य पूजां प्रकटीचक्रतुः ॥

नागास्ते सहसांबुदाकृतिजुषः स्फूर्जन्महागर्जितो—
द्धाटीपाटितपुष्करा पटुनटचंडानिलैर्ढौकिताः ॥
वृष्टिं विष्टपविप्लवस्रुतिनिभां कल्पांतमेघच्छटां ।
मुष्टिं मुष्टिसमीककल्पनकला दृष्टास्तदा चक्रिरे ॥३२॥
तज्जलं जलदोद्गीर्णं बलमावेष्ट्य जैष्णवं ॥
अधस्तिर्यगथोर्ध्वं च समंतादभ्यदुद्रवत् ॥ ३३ ॥

तदानीं उपर्यधः परिकलितयोश्छत्ररत्नचर्मरत्नयोर्मध्ये सप्तदिनावधिनिरुपद्रवमासीने चक्रधरसैन्ये निधीश्वरादिष्टगणबद्धामरैर्हुंकारेणोत्सारितेषु नागेषु कुरुराजोऽपि मुक्तसिंहगर्जितप्रतिध्वनिताहिमाचलकंदरः करकलितदिव्यास्त्रः समधिरूढदिव्यरथो नागान्प्रत्यभिषेणन विधाय शरधाराभिर्गगनतलं पूरयामास ॥

१ हस्त्यारोहाः । २ अश्वारोहाः । ३ यत्सेनयाभिगमनमरौ तदभिषेणनं । ४ पुष्कर आकाश । ५ मुष्टियुद्धं । ६ जयनशीलस्य भरतेश्वरस्य ।

तन्मुक्ता विशिखा दीप्ता रेजिरे समराजिरे ॥
द्रष्टुं तिरोहिताञ्नागान्दीपिका इव बोधिताः ॥ ३४ ॥

तदनु तद्विजयलक्ष्मीसनाथं समुखागतं प्राप्तमवेश्य ग्ध्रुनि कुञ्जरानं सन्मानयन् चक्रधरो नाकौनीकविभ्रमनसञ्जातसाध्वसाभ्यां म्लेच्छनायकाभ्यां सोपायनमागत्य वंदितचरणारविंदः पृतनया सह हिमाद्रिं प्रस्थितो मध्ये मार्गं सिंधुदेव्या महर्षं सिंधुजलैरभिषिक्तः परिलब्धदिव्यभद्रासनः कैश्चित्प्रयाणैर्हिमवत्कूटोपकंठमासाद्य, पुरस्कृतपुरोहितः कृतोपवासः शुचिः शय्यामधिशयानो दिव्यास्त्राण्यधिवास्य करकलितवज्रकांडकोदंडो हिमवत्कूटं प्रति दिव्यममोघं शरमारोपयामास ॥

तत्रत्यदेवस्त्वरितं समागाद्द्रष्टुं तदा मागधवद्विनीतः ॥
चक्री च तं देवमुदारवाचं संमान्य हर्षाद्विससर्ज भूयः ॥३५॥

तदनु प्रत्यावृत्य सेनया सह समासाद्य वृषभाद्रिं पुंजीभूत इव स्वयशोमंडले तस्मिन् गिरौ स्वनामाक्षराणि प्रकटयितुकामस्तत्रत्यानि राजसहस्रनामाक्षराणि विलोक्य गर्वक्षतिविलक्षितो चापत्र, कस्यचिद्राज्ञो नामाक्षराणि निरस्य विलिखितनिस्तुल्यनिजप्रशस्तिः 'सर्वः स्वार्थपरो लोक' इति लोकप्रवादं सार्थक्यमापादयामास ॥

भूयः प्रोत्साहितो देवैर्जयोद्योगमनूनयन् ॥
गंगापातमभीयाय व्याहूत इव तत्स्वनैः ॥३६॥

तत्र किल गंगाजलावर्तनविलोकनविविधकौतुकेन वीक्षमाणो गंगादेव्या पूजितश्चक्रधरः पृतनया समं निवृत्य प्राप्तविजयार्धाचलकटकनिकटं, पूर्ववद्गुहाद्वारपाटनाय प्राच्यखंडविजयाय च सेना-

---

१ देवसैन्य। १ आश्चर्य । २ अनुपमा ।

न्यमादिश्य तत्र षण्मासान्सुखेन रममाणे:, तदा समागताभ्यां पुरस्कृतविचित्रोपायनाभ्यां नमिविनमिभ्यां विद्याधरपातिभ्यां प्रार्थितो मदनमोहनमन्त्रदेवतामिमां मूर्तिमतीं सुभद्रानाम सुदतीं नमेः स्वसारमुद्वाह्य परमानंदनिर्भरस्तावदागतेन कृतकृत्येन सेनाधिपेन सह खड्गप्रपाताख्यां गुहां पूर्ववद्व्यतीत्य नाट्यमालनामधेयेन सुरवरेण पूजितो भरतराजः क्रमेण कैलासधराधरोपाते सेनां निवेशयामास ॥

तत्रास्थानं विगाह्य त्रिभुवनरमणं शुद्धधीरर्चयित्वा ।
नुत्वा नत्वा च भूयस्तटनिकटगतैः सैनिकैः संपरीतः॥
षट्खंडानां विजेता भरतनरपतिः किन्नरैर्गीयमानः।
स्फारप्रागल्भ्यकीर्तिर्निजपुरगमने संमुखः संप्रतस्थे ॥३७॥
ततः कतिपयैरेव प्रयाणैश्चक्रिणो बलं ॥
अयोध्यां प्रापदाबद्धतोरणां चित्रकेतनां ॥ ३८ ॥

इत्यर्हद्दासकृतौ पुरुदेवचंपूप्रबंधे नाम नवमस्तबकः ॥



## अथ दशमः स्तवकः

तदनु नातिदूरसन्निविष्टस्य चक्रधरस्य पुरप्रवेशसमये विजिताराति-चक्रे चक्ररत्ने पुरगोपुरं नाक्रमति, तद्रक्षणदक्षेषु यक्षेषु क्रोधविस्मयाभ्यां परवशेषु, तदुदन्तमाकर्ण्य विस्मितेन प्रभुणा पृष्टे पुरोहिते भ्रातृविजया-वशेषं चक्रानाक्रमणनिमित्तं ब्रुवाणे, तत्क्षणं सोपायनवाचक प्रहितैः कार्यज्ञैर्दूतैर्विज्ञातवृत्तान्तेषु भरतेशानुजेषु जगद्गुरुसभामासाद्य तपोल-क्ष्मीमेव बहुमन्यमानेषु, समागतदूतव्रातविदिततदुदन्तो मनुकुलजलधि-कुमुदिनीकान्तो भरतमहीकान्तः किंचिच्चिन्ताक्रान्तो भुजबलशालिनं भुजबलिनं युवानमनुनेतुं व्याकुलमानसः कार्यज्ञं मंत्रविशारदं दूतं तत्प्रति प्रेषयामास ॥

सोऽयं दूतो विविधविषयान्प्रागतीत्यातिचित्रान् ।
गत्वा स्वर्गादधिमदवतीं राजधानीं क्रमेण ॥
ज्ञातोदंतं भुजबलिनृपं द्वारपालैर्महीभृत्—
पीठासीनं दिनकरनिभं तेजसा संददर्श ॥ १ ॥

अनंगः सांगः किं मधुरुत मनोज्ञाकृतियुतः ।
प्रतापः किं मूर्तः प्रकटितशरीरं किमु बलं ॥
समूहः किं धाम्नां हरितमणिबद्धः किमु गिरिः ॥
क्षितीशं दृष्ट्वासाविति विविधसंदेहमभजत् ॥ २ ॥

ततश्च दूरादवनतशिराः ससत्कारं यथोचितमासनमुपागतः शासनहरो भरतराजस्य निखिलदिग्विजयादिकुशलप्रश्नपूर्वकं तस्य कर्तव्यशेषमस्ति न वेति नरपालेन पृष्टः सादरमिदमभाषिष्ट ॥

मातंगोपरि संपतंत्यनुदिनं श्यामा कृपाणीलता ।
सद्धारांचितया तया परवशो नान्यां समालोकते ॥
मां भृत्येषु नियुक्तवान्निधिपतिस्तात श्रुतं तेऽस्त्विति—
श्रीवार्तां गदितुं ध्रुवं जलनिधिं यत्कीर्तिराटीकत ॥ ३ ॥

किंच ॥ यः किल वीर्यलक्ष्मीनिलयो निःस्वोपकारसमासक्तो निखिलसपद्विराजमानो निष्यादरविरहितो निजायाः मतेरधीनः समापततामरातीनां रणे सान्निध्यमात्रेण निधनद संख्यानां नियमप्रकारगोचरः सरसमैत्रीनिघ्नगुणाकरः परनियातिविधिःकारधुरीणः संमाननाविषयीकृतनियोगिजन चक्रधरस्तद्रिपुश्च किं तु तद्रिपुर्न्यून इति विशेषः॥

स राजराजो भरतः समादिशति मन्मुखात् ॥
भवंतमनुजं धीरं चक्रविख्यातवैभवः ॥ ५ ॥
न शोभते राज्यमिदं त्वया विना ।
हितैषिणा कोविदलानुजन्मना ॥
तदेव राज्यं प्रमुदाहरंति ।
स्वबांधवानां परिभागकारणं ॥ ६ ॥

किंच

यत्पादांबुजमानमत्सुराशिरोमंदारमालारजो—

---

१ गजोपरि चाण्डालोपरि च । २ कृष्णखड्गलता पक्षे श्यामा यौवनवती स्त्री । ३ सद्धारांचितया खड्गधारायुतया पक्षे सत्—हारांचितया । ४ प्राप । ५ भरतराजस्य शत्रुः 'नि' अक्षरेणशून्यः यथा वीर्यलक्ष्मीकवः, स्वोपकारसमासक्तः, खिलसपद्विराजमानः इत्यादिः । ६ निधौ द्रव्यादिषु आदररहितश्चक्री, निष्यादरविरहितः—बुद्धिशून्यः शत्रुः । ७ आत्मबुद्धेरधीनश्चक्री, जायायाः पत्न्याः बुद्धेरधीनः शत्रुः ॥

जुष्टं लेखकिरीटकांतिलहरीपुंजेन किंजल्कितं ॥
युष्मद्वज्राकिरीटगत्न विमलं नो चेन्मरालायते—
तच्छोभां न दधाति देव विलसद्रक्तांगुलीसङ्घलं ॥७॥
अवंध्यशासनस्यास्य शासनं ये विमन्वते ॥
शासन द्विषतां तेषां चक्रमप्रतिशासनं ॥ ८ ॥

इत्यादि सामभेददंडप्रदर्शनं प्रभुशासनमुदाहृत्य विगतवचसि वचोहरे मदस्मितमकरंदोद्गारेवदनारविंदो भुजबलिकुमारः सरसमधुरगभीर्थमित्थं वनचमाचचक्षे ॥

सामि दर्शयता सामं भेददंडौ विशेषतः ॥
अस्मत्सु भवतो भर्त्रा स्वप्रज्ञा प्रकटीकृता ॥ ९ ॥
खलतां खलतामिवाफलां सुमनोभी रहितां दधात्ययं ॥
भरतः स यतो दिदृक्षते सहसास्मान्बलतश्च मायया ॥ १० ॥
दिशां जेता चक्री यदि सुरसमूहं विजितवान् ।
तदा दर्भैः शय्यां किमलभत दारिद्र्यवशतः ॥
तथा स्यात्ते भर्त्तुः प्रतिहतिविदूर यदि बलं ।
जले म्लेच्छैः क्रमेऽप्लवत खलु किं कौतुकवशात् ॥ ११ ॥
राजोक्तिर्मयि तस्मिंश्च संविभक्तादिवेधसा ॥
राजराजः स इत्यद्य स्फोटो गंडस्य मूर्ध्नि कः ॥ १२ ॥
चक्रंभ्रांतिमुदारदंडकलितान्संसाधयन्पार्थिवान् ।

---

१ सार्थक । २ आज्ञां । ३ विनाशकं । ४ अप्रातिकूल शासनं आज्ञा यस्य । ५ स्वस्य । ६ दुष्टतां । ७ आकाशलतां । ८ पुष्पै रहिता सज्जनै रहितां । ९ पिटकः ' गुंडस्तु पिटके योगभेदे खड्गिकपोलयोः ' इति विश्वलोचनः । १० कुंभकारचक्रस्य भ्रमणं पक्षे चक्ररत्नभ्रमण । ११ दंडो यष्टिः दंडास्यं रत्नं च । १२ घटान् नृपांश्च।

साटोपं घटयन्परीतविभवः सत्कुंभ[1]भृद्भि पुर ।।
संपुष्यत्पर[2]मार्तिकः स भरतो नूनं कुला[3]लायते ।
सोऽयं यन्नरि[4]चक्रलोपकुतुकी स्याज्जीवनस्य क्षितिः ।।१३।।

स किल मागध[5]कलितरा[6]गः सरसमधुरकलयान्वितः पटुगंध[7]र्वानुगतः प्रवीणो भरत[8]. समररंगतले मया सह ताडवमारचय्य भरतता सफलयतु ।।

ततः समरसंघट्टे यद्वा तद्वास्तु नौ द्वयोः ।।
नीरे[9]कमिदमेकं नो वचो हर वचोहर ।। १४ ।।
इत्यादिश्य क्षितिपतिरयं दूतमेनं विसर्ज्य ।
क्षोणीपालप्रकरमुकुटीकोटिसंघाट्टितांघ्रिः ।।
चंचत्सेनां समरकुतुकः प्रोल्लसद्रोमहर्षो ।
प्रस्थानाय प्रकटितमदामायतामादिदेश ।। १५ ।।
मदकरिघटाबंधै रंगत्तुरंगमसंगतैः
प्रचालितबलैर्भेरीरावैर्विदारितदिङ्मुखैः ।।
क्षितितलगलद्धूलीपालीविशोषितवारिधि-
र्भुजबलिमहीपालो भेजे भुवं समरोचिताम् ।।१६।।

अथ दूतवचननिशमनकुपितभरतराजसमादिष्टा समुन्नतजयेक-तनकलिततया संततसपतन्मदधाराविराजिततया सिंदूरपरागश्रृंगारिता-

---

१ प्रशस्तघाटधारकैः पक्षे प्रशस्तगहस्थल धारकैः गजैः । २ परमार्तिक उत्तमो घटः मृतिकाया भवः मार्तिकः पक्षे परमा अर्तिः धनुष्कोटिर्यस्य सः ।। ३ कुंभकारायते । ४ अरि चक्रं शत्रुसमूहः । ५ मागधो मागधो नाम व्यतरदेवः। पक्ष मागधो बंदी । ६ ' रागः प्रीतिः गाधारादि गायनरागश्च । ७ गंधर्वोऽश्वः गायकश्च । ८ भरतश्चक्रवर्ती नाट्याचार्यश्च । ९ निःसशय ।

गतया रत्नमयखेटकघटितकुम्भस्थलतया च महामहीरुहमहितान् कटक-निकटशकटनिर्झरान मत्स्याबुद्बुदचुम्बितान अवचयितरविबान् असंख्याता-ङ्गमथरा वराम्तुलयद्भिर्गवसिधुरैर्जवाविजितपवनैर्निजरयनिरीक्षणक्षण--हीणान् हरिदश्वहरिताश्वान् खुरपटघट्टितकुट्टिमप्रन्यता¹लिद्रजासेरे विलीनान्विदधानै क्रामद्भिरिव गगनतलं, कवलीकुर्वद्भिरिव मार्गा-याम, अतिक्रमद्भिरिवोत्थितानि रजांसि, तर्जयद्भिरिव हेषारवेण सप्तिजवसमजातमहद्गप्रजवपवनम्, आपिबद्भिरिव मुखलग्नफेनपुञ्जक-पटेन शात्रवयशोमडल, तरंगैरिव बलजलनिधे:, मूर्तैरिव वेगैर्वाजिभि-र्विजयलक्ष्मीवेणीदण्डायमानकृपाणलताकलितकरै: पदातिभिः, संग्राम संतरणनाविकायमानै मदेहवंवैरिव वीररसे, साकारैरिवोत्साहै, रथकड्याsसु² विराजमानै रथिकैर्गगनतलविलसितैः सुरखचरैश्च परीता-पडंगपताकिनी रणांगणावतरणाय प्रचचाल ॥

नदलु खिनदद्वाजिव्राते प्रतापवशोत्थिते
रजसि जगतामांध्य व्यातन्वतीव विजृंभिते ॥
दिनकरसदृक्चक्रोद्योतेन मार्गमबुध्यत
निखिपातिदहानीकं व्याक्रांतसर्वदिगंतरं ॥ १७ ॥

ततश्च यावच्चक्रवरानीक भुजवलिबलेन महप्रालयसमये पूर्वपारा-वार: पश्चिमपारावारेणेव पटुगर्जनतर्जितदिशावशावल्लभं संगम्य युद्धाय सन्नद्धं तावदग्रेसरै: प्रज्ञावतां, अर्थीनैर्जनानुरागस्य, आवासैर्मन्त्रलक्ष्म्या आकरै:, कार्यचातुर्यस्य महत्तमैः सचिवैर्मुधा जन-विनाशकारणं प्रविदारणं³ न युज्यते, युज्यते च युवयोर्जयलक्ष्मीतुलारोहण

---

१ ग्रासीकुर्वद्भिः २ रथानां समूहः रथकड्या. ३ युद्धं ' युद्धमा-योधन जन्यं प्रधन प्रविदारण ' इत्यमरः ।

मल्लदृष्टिमुष्टिरणमिति घोषितौ परित. पश्यत्सु सुरगगनचरेषु रणा-
गणमवतीर्णौ तौ नरकुञ्जरौ जंगमाविव निषधनीलाचलौ चकासामासतुः॥

तदा जयश्रीरुभयोः सकाशगतागतायासमनुव्रजंती ॥
तद्द्वयोद्भासितशालद्भुशागतागतायाः सितगोरिवाभूत्॥ १८॥

दृष्टिं धीरतरां निमेषरहितां व्यातन्वता दोर्बलि—
क्षोणीशेन जितेऽत्र दृष्टिसमरे पत्यौ निधीनां क्षणात् ॥
उद्वेलस्य बलार्णवस्य विपुलं कोलाहलं वारयन् ।
पृथ्वीपालगणः कनीयसि जयश्रीभावमाघोषयत् ॥ १९ ॥

सरसि जलमागाधौ जलयुद्धमदोद्धतौ ।
दिग्गजाविव तौ दीर्घैर्व्यात्युक्षामासतुर्भुजैः ॥२०॥

तदा किल भुजबलियुवा जयश्रीदृढालिंगितनिजभुजवशायुगलनि
गलितमौक्तिकनिकरैरथवा निजभुजनिर्दयालिंगितजयलक्ष्मीवक्षःस्थलत्रु-
टितोत्क्षिप्तहारमणिभिर्यद्वा बलोत्कृष्टप्रवेष्टप्रासादमधिरूढाया. पराक्रम
लक्ष्म्या अट्टाहासकातिलवैराहोस्विन्नखचन्द्रानिर्गलितसुधाश्रीकरैरिव
विराजमानैः, सरभसमुदस्तभुजयुगरयजनितपटुपवनास्फालननिर्लोलस्व-
र्लोकतरंगिणीकल्लोलशीकरनिकरद्विगुणितैर्निलिंपकरमुक्तकल्पतरुकुसुम--
निचयेन मधुकरविसरानुरोधविरहव्याजितभेदैर्जलच्छटाशीकरैश्चक्रधर-
मवाकिरत् ॥

बहवः सलिलासारा भरतेश्वरवक्षसि ।
निषधाचलसंगिन्यो निम्नगा इव रेजिरे ॥ २१ ॥
भरतेशकरोन्मुक्तांभोधारा दोर्बलीशिन ।

---

१ बाहुः भुजबाहू प्रवेष्टो दोरित्यमरः, ।

प्रांशोरप्राप्य दूरेण प्रापधन्मुखसंन्निधौ ॥ २२ ॥
नभःस्थलमुपेयुषां दिविषदां तथा कौतुकात् ।
करे कुसुमसंचयं जयिनि वर्षतां हर्षतः ॥
करोद्धतजलच्छटाविमलशीकराडंबरैः ।
प्रतिप्रसववर्षविभ्रममवाप्त नो दोर्बली ॥२३॥
भुजरयपवनाहतद्युसिंधुप्रचुरजलामलशीकरास्तथा ता ॥
भुजबलिभुजचोदितांबुधारा द्युचरणयोरनुचक्रुरबुकोलिं॥२४॥

तदनु पुनर्भुजबलिकुमारजयोद्धोषणमुखरितादिगंतरे तत्र समराजिरे नियुद्धाय सन्नद्धौ पञ्चाननवंचनाचंचुपराक्रमौ तौ वीराग्रेसरौ समवतेरतु ॥

भुजयंत्रनियन्त्रणावशेन क्षणसंरुद्धपरस्परप्रयत्नौ ॥
सुरवारमनोहरं व्यधत्तां नरवीरौ निपुणं नियुद्धशिल्पं॥२५॥

ततश्च जगदेकवीरेण भुजबलिकुमारेण दिवि भ्राम्यमाणो मणिमुकुटकांतिकल्लोलवोल्लितगगनतलः क्षणमालातचक्रलीलां भजमानो नीलाचलशिखरसांगिन गांगेयगिरिं तुलयन्भरतराजः बलकोलाहलमसहमानतया क्रोधाधस्तास्मिन्कनीयसि चक्रं प्रयोजयामास ॥

अभ्यर्णमेत्य तच्चक्रमथ कृत्वा प्रदक्षिणं ॥
अवध्यस्यास्य पर्यान्ते तस्थौ मंदीकृतातपम् ॥२६॥

तदानीमहो धिक् साहसं कृतमिति भरतनिंदामुखरे तस्मिन् रणाजिरे वीराग्रेसर करेण चक्रवरतुलयन्नवतार्य नरपालकुलकलितस्तुतिमालः सकलनृपवरिष्ठेन ज्येष्ठेन राज्यानुरागवशेन विहितं गर्हितमनुसंधाय

१ दीर्घकायस्य । २ आकाशभूम्योः।

परिकलितविषयवैराग्यस्तत्कालोचितैर्मधुरकर्कशैर्वचनैर्व्यायसाश्चित्ताल्हादं चिरं कुर्वाणो महाबलिनि निजनंदने नीक्षिप्तराज्यभारस्त्रिभुवनगुरुं निकषा दीक्षामासाद्य वत्सरानशनावसाने भरतादिभिरर्चित. केवलाख्यपरज्योतिरासमाद ।।

जेता समस्तहरितां पाता सर्वमहीशिनां ॥
पुरं साकेतमुत्केतुं प्राविक्षद्भरतेश्वरः ।।२७॥
नृपास्तथा मागधमुख्यलेखा गंगादितीर्थाम्बुनिरूढकुंभैः॥
तमभ्यार्षिचन्भरताधिराजमानंदभेरीरवपूरिताशाः ॥२८॥
यस्याज्ञा नृपलेखवर्गमुकुटेषूद्दामयालायते ।
यत्कीर्तिर्विमला दिशांबुजदृशां हेलादुकूलायते ॥
यत्तेजश्च दिशावधूकुचतटे काश्मीरपत्रायते ।
सोऽयं श्रीभरताधिपो निधिपतिः शास्ति स्म विश्वंभरां॥२९॥
सुभद्रां भद्रांगीं नयनजितनीलोत्पलरुचिं ।
समालिंगन्मोदादतिशयितमानंदमभजत् ॥
मुखं यस्याश्चंद्रो वचनमपि पीयूषमपरं ।
कचालिभृंगालि र्घनकुचयुगं चक्रमिथुनं ॥३०॥

अथ कदाचिदनगाराणा निःस्पृहतया सागारानणुव्रतधरान्धनधान्यादिभिस्तर्पयितुमना राजराजो हरितांकुरपुष्पफलादिभि कृतोपहारे नृमंदिराजिरे प्रवेशाप्रवेशाभ्या पौरजानपदाना व्रताव्रते विविच्य निश्चित्य च तन्निमित्तमापृष्टाना तत्र प्रविष्टाना प्रतिवचनेन सादरं तानिमान्दृढंव्रतानभिनद्य संयोज्य च पद्मानिधिगृहीतैर्ब्रह्मसूत्रै., संपूज्य च दानमानादिभिरुपासकसूत्रप्रतिपादितानि इज्यावार्तादत्तिस्वाध्यायसंयमतपोरू-

पाणि षट्कर्माण्याधानप्रीतिसुप्रीतिधृतिमोदप्रियोद्भवनामकर्मबहिर्यान-निषद्यान्नप्राशनव्युष्टिकेशवापलिपिसंख्यानसंग्रहोपनयनव्रतचर्याव्रतावतर-णाववाहवर्णलाभकुलचर्यागृहीशित्वप्रशांतिगृहत्यागदीक्षाद्यजिनरूपमौ-नाध्ययनवृत्तितीर्थकरत्वभावनागुरुस्थानाभ्युपगमनोपग्रहणस्वगुरुस्थानसं-क्रांतिनिःसंगत्वात्मभावनायोगनिर्वाणसाधनेंद्रोपपादाभिषेकविधिदान—सुखोदयेंद्रत्यागावतारहिरण्योत्कृष्टजन्ममंदराभिषेकगुरुपूजोपलभनयौवरा-ज्यस्वराज्यचक्रलाभदिग्जयचक्राभिषेकसामाज्यपारिनिष्क्रमणयोगसंन्माहा-र्हंत्यश्रीमिवहारयोगत्यागानिर्वृतिरूपास्त्रिपञ्चाशद्गर्भान्वयक्रियास्तथा—अवतारवृत्तिलाभस्थानलाभगणग्रहणपूजाराध्यपुण्ययज्ञदृढचर्यापयोगित्व-पूर्वोक्तोपनयनादिरूपा अष्टचत्वारिंशद्दीक्षान्वयक्रियाः सज्जातिसद्गृहीत्व-पारिव्राज्यसुरेन्द्रत्वसाम्राज्यपरमार्हन्त्यपरमनिर्वाणरूपा सप्तकर्त्रन्वय-क्रियास्तथातिबालविद्याकुलावधिवर्णोत्तमत्वपात्रत्वसृष्टयधिकारव्यवहारे-शित्वावध्यत्वमानार्हत्वा दंड्यत्व प्रजासंबंधांतरस्वरूपान्दशाधिकारान् श्रुतिस्मृतिपुरावृन्तमन्त्रक्रियादेवतालिंगकामान्नविषयशुद्धिदशकं पक्षशु-द्धि चर्याशुद्धिसाधनशुद्धिरूपशुद्धित्रयं च सविस्तरमुपदिश्यैवमुवाच

पूर्वोक्तकर्मनिर्माणकर्मठा ये समाहृताः ॥
ते वर्णोत्तमभूदेवदेवब्राह्मणशब्दितैः ॥ ३१ ॥
निस्तारको ग्रामपतिर्मानार्होंऽही लोकपूजितः ॥
इत्यन्वर्थैर्नामभिश्च जोघुष्यंते महीतले ॥ ३२ ॥
इति भरतनरेंद्रप्रामसंस्कारयोगा ।
व्रतनियमगरिष्ठाः श्रीश्रुतांभोधिनिष्ठाः ॥
जिनपतिचरणांभोजातलोलंबलीला ।

जगति बहुमतास्ते ब्राह्मणाः ख्यातिमीयुः ॥॥३३॥

अथ कदाचन चक्रधरः काश्चिदद्भुतदर्शनान्स्वप्नानवलोक्य किंचिदुद्विग्न स्वांतेन कामपि चिंता गाहमानः कथंचित्फलानि जानानोऽपि दृढतर तेषा निश्चयाय भगवदास्थानं प्रति प्रस्थितसेनानुयातैर्मुकुटबद्धैः परिष्कृतपार्श्वभागो दूरादेव भगवदास्थानभूमिं दृष्ट्वा नत्वा च गंधकुटीमध्ये विलसंतं देवदानवादिसेवितं भगवदर्हन्तमवदत ॥

जिनेंद्रोरुन्मीलत्पदकमलसत्कांतिलहरी ।
स्फुरत्संध्यारागोल्लासितमणिकोटीरशिखरे ॥
तदा चक्री प्राप क्षितिभृति चिरादाविरभवत् ।
घनध्वांतध्वंसी विलसदवधिज्ञानतरणिः ॥ ३४ ॥
स्तुत्वा स्तुतिभिरीशानमभ्यर्च्य च यथाविधि ॥
निषसाद यथास्थानं धर्मामृतापिपासितः ॥ ३५ ॥

तदनु राजराजस्त्रिभुवनगुरौ धर्ममर्गविधातरि त्वयि विलसमाने बालिश्यविलसितमिद मम ब्राह्मणसर्जनं किं दोषाय किमु गुणायेत्यापृच्छय अवधिज्ञानविज्ञातान्यपि स्वप्नफलानि तत्रत्याना प्रकटयितु सादर पुरुदेवमपृच्छत् ॥

श्रीमद्दिव्यवचोनवामृतझरीपानेच्छया निश्चलं ।
चित्तस्थापितशंकितं गगनगैर्ध्यानावबंधायितं ॥
सभ्यानां वलयं समात्तकुतुकं प्रोल्लासयन् श्रीपते—
र्वक्त्रादाविरभून्मरंदमधुरो दिव्यध्वनिस्तत्क्षणं ॥ ३६ ॥
पूजा द्विजानां शृणु वत्स ! साध्वी कालांतरे प्रत्युत दोषहेतुः ॥
काले कलौ जातिमदादिमेते वैरं करिष्यंति यतः सुमार्गे ॥३७॥

वत्स ! कालांतरे दोषमूलमप्येतदंजसा ।
नाधुना परिहर्तव्यं धर्मसृष्टचनतिक्रमात् ॥
इति त्रिभुवनाधीशो गिरा कोमलया सभां ।
उल्लास्य मधुरं स्वप्नफलान्येवमवोचत ॥ ३८ ॥

अये वत्स महीं विहृत्य महीभृत्कूटमास्थिताना त्रयोविंशतिपंचाननाना विलोकनेन त्रयोविंशतितीर्थकरोदये दुर्णयानुद्भवन । पुनरेकाकिनः कंठीरवपोतस्योपकंठे कुंजरानिरीक्षणेन सन्मतेस्तीर्थे सानुषंगकुलिंगि प्रकटन । कुभींद्रभरभग्नपृष्ठस्य सैंधवस्यावलोकनेन दुःषमसाधुसंदोहस्य मुनिपरिवृढोपवाह्यनिखिलतपोगुणवहनासामर्थ्यं । शुष्कपत्रोपयोगिनां अजाना निध्यानेन त्यक्तसदाचारगणा नराणामसद्वृत्तितास्थापन । मदमथरसिंधुरकंधरारूढशाखामृगानिर्वर्णनेन आदिक्षत्रान्वयविच्छेदि भूपालकत्वमकुलीनाना, काककलितोलूकसंबाधदर्शनेन कालांतरे जनाना जैनधर्मपरिहारेण मतांतराश्रयणं, नृत्यद्भूतनिरीक्षणेन प्रजाना देवतात्वेन व्यंतरभजन शुष्कमध्यतटाकपर्यंतजलावलोकनेन धर्मस्यार्यनिवासपरित्यागेन प्रत्यंतवासिष्ववस्थानं. पांसुधूसरमणिगणदर्शनेन पंचमयुगे योगिनामृद्धचप्रादुर्भवनं, सत्कारसत्कृतसारमेयनिध्यानेन व्रतरहितानां द्विजाना पूजन, तरुणवृषभविहारावलोकनेन तारुण्य एवश्रामण्येऽवस्थान. परिवेषोपरक्तदोषाकरविलोकनेन कालांतरीणाना मुनीना समनःपर्ययावधेरजनन, अन्योन्य सह सभूय वृषयुगलगमनेक्षणेन मुनीना साहचर्येण वर्तनं.जलधरावरणरुद्धादिवाकरनिरीक्षणेन पंचमयुगे प्रायः केवलज्ञानाजननं, शुष्कद्रुमेक्षणेन पुंसा स्त्रीणा च चारित्रच्यवनं । जीर्णपर्णावलोकनेन महौषधिरससमापनं च सूचितमिति ॥

इतीरितस्वप्नफलानि बुद्ध्वा विश्वस्य विघ्नोपशमाय धर्मे ॥
मतिं समाधेहि मनोज्ञबुद्धे ! धर्मो हि सर्वेष्टदकामधेनुः ॥३९॥
इति भगवतो भाषां श्रुत्वा प्रणम्य पुनःपुनः ॥
भरतनृपतिः प्रत्यावृत्य प्रविश्य निजं पुरं ॥
विधिवदकरोत्पूतः शांतिक्रियां जिनपूजनं ।
निधिपतिरयं पात्रे दानानि चैव महामतिः ॥ ४० ॥
कदाचिद्वैराग्यादथ स किल मेघेश्वरनृपः ॥
सभां भर्तुर्गत्वा प्रणतभगवत्पादजलजः॥
कृतग्रंथत्यागाज्जिनविहितसत्संयमधरः ।
क्रमात्सम्प्रद्धर्द्धिः पुनरजनि भर्तुर्गणधरः ॥ ४१ ॥

तदानीमुदारबोधे जगत्रयनाथे च धर्मक्षेत्रेषु धर्मबीजान्युप्त्वा सेचयित्वा च धर्मामृतवृष्टिभिर्भव्यसदोहस्य तत्फलसंपत्तये चिरं विहृत्य पौषपौर्णमासि दिने कैलासशैलविलसितश्रीसिद्धशिखरं निरभिलाषमध्यासीनं भरतपतिराप्राग्भारमा लोकांतमतिदीर्घं मंदरामूधरं, युवराजश्च स्वर्गादागत्य भवरोगनिरसनपूर्वकं सुरलोकप्राप्तये कृतोद्यमं महौषधिद्रुम, गृहपतिश्च निरंतरं नरनिकरायाभीष्टार्थं दत्वा नाकाक्रमणाय सत्वरं कल्पतरु, सचिवाग्रेसरः पुनर्जिघृक्षुजनेभ्यो नानारत्नानि प्रदाय प्रकटिताग्रगामनाटोपं रत्नद्वीपं, सेनापतिरपि कैलासोल्लंघनसन्नद्धं विषघटितवज्रपंजरं कुंजररिपुं, सुभद्रादेवी च यशस्वतीसुनंदाभ्यां सह शोचंतीं पुरंदरसुंदरीं स्वप्ने निशामयामासुः॥

निधिपतिमुखैर्दृष्टस्वप्नान्निशम्य पुरोहितः ।
पुरुजिनपतेर्हत्वा कर्माणि सर्वजगत्पेतः ॥

वहुमुनिजनैः सार्कं लोकांतभागसुगामितां ।
वदाति निखिलस्वशाल्येषेति धीरमवोचत ॥ ४२ ॥

तदानीमेवागतादानंदनाम्नः शासनवशात् मुकुलीकृतकरसरोरुहतया समासरन्या समुपास्यमानं भगवतो दिव्यध्वनिदिवाकरास्तमयं श्रुत्वा गत्वा च सत्वरं भगवत्सन्निधिं चक्रधरश्चतुर्दशदिनानि महापूजया भगवंतमसेवत ॥

माघे मासि चतुर्दशीदिनवरे सूर्योदये श्रीपति—
र्भेऽे चाभिजिति प्रतीतसुगुणे पक्षे वलक्षेतरे ॥
पल्यंकासनयास्थितः स भगवान् प्राग्दिङ्मुखःसर्वबित् ।
मुक्तिश्रीकरपीडनाय सहसा सन्नद्ध एष स्थितः॥४३॥

अथ खलु भगवॉस्तृतीयशुक्लध्यानाविध्वस्ताघातिकर्मचतुष्टयः समधिष्ठितायोगिकेवलिगुणस्थानो व्यपगतशरीरत्रयः सिद्धत्वपर्यायं गुणाष्टजुष्टमश्नुवानः क्षणात्तनुवातः परमौदारिकदिव्यदेहात्किंचिदूनपरिमाणो नित्यनिरंजनरूपः सर्वदा विश्वं पश्यन्सुखमासामास ॥

अथ झटिति चिकीर्षुर्मोक्षकल्याणपूजां ।
परमपुरुजिनेंद्रोर्देवतानां निकायः ॥
इदममलशरीरं भर्तुरस्येति तोषात् ।
मणिमयशिबिकायामर्पयामास साधु ॥ ४४ ॥

स्फीताग्नींद्रतिरीटकोटिमणिसंजाताग्निना चंदन—
श्रीकर्पूरलवंगकुंकुमघृतक्षीरैः स्फुरद्वृद्धिना ॥
गंधाद्यर्चितकुंडजेन जगतः सौगंध्यसंदायिना ॥
भर्तुर्देहमदीपयत्कुतुकतः सोऽयं दिवौकोगणः॥४५॥

एवं सुरभिकुसुमगंधाक्षतादिभिरभ्यर्चितभगवद्दिव्यदेहहोमकुंडद-क्षिणभागे गणधरशरीरसंस्कारहुतवहकुंडं तदपरदिग्भागे अनगारके-वलिहुताशकुंडं परिकल्प्य गार्हपत्यदक्षिणाग्न्याहवनीयाभिधानात्कुंडत्र-यादुद्धृतभस्मना ललाटकंठभुजशिखरयुगलहृदयप्रदेशेषु वयमपि भव-कल्याणभागिनो भवामेति विरचितरेखा. सकललेखा सहर्षमानंदनाटकं संभूय संपाद्य स्वभवनमभजत ॥

संध्यात्रये पावनरूपमेतदग्नित्रयं सादरमर्चयंतः ।
गृहस्थपूजातिथयो भवेतेत्युपासकान्धीरमुवाच चक्री ॥ ४६ ॥
गुरुवियोगहुताशनदीपितं भरतराजमुदारगिरां वरः ॥
वृषभसेनगणी वचनामृतैरुपशमं नयति स्म महागुणः ॥ ४७ ॥
विपास्य चिंतां गुरुशोकजातां गणेशयानस्य विनम्रमौलिः ॥
निंदन्नपारां निजभोगतृष्णां चक्री विभूत्या स्वपुरं विवेश॥४८॥

अथ कदाचन चक्रवरकरकलितमणिदर्पणबिंबितं शरच्चंद्रडंबर-विडंबकं पलितनिजवदनबिंबं पुरुपरमेश्वरसन्निधानादागतमिव दूतमव-लोक्य विगलितमोहरसः साम्राज्यं जरत्तृणमिव मन्यमानो निजात्मजमर्ककीर्तिं राज्यलक्ष्म्या संयोज्य महितापवर्गद्वारप्रतिमं संयमं स्वीकुर्वाणः सद्यःसमुत्पन्नेन मनःपर्ययबोधेन केवलज्ञानेन च विदितसर्वपदार्थसार्थः पुरंदरादिवृंदारकसंदोहवंद्यमानपादारविंदस्तत्र तत्र भव्यसस्येषु धर्मामृतवृष्टिं व्यातन्वानश्चिरं विहृत्य परमं पदमाससाद॥

वृषभसेनमुखा गणिनस्तथा सकलजंतुषु सख्यमुपागताः ॥
विमलशीलविशोभितमानसाः परमनिर्वृतिमापुरिमे क्रमात्॥४९॥

जयतां मृदुगंभीरैर्वचनैः परिनिर्वृतेर्हेतुः ॥
सुरसार्थसेवितपदः पुरुदेवस्तत्प्रबंधश्च ॥ ५० ॥

※ इत्यर्हद्दासकृतौ पुरुदेवचंपूप्रबंधे दशमः स्तबकः ※

## कवेः प्रशस्तिपद्यं

मिथ्यात्वपंककलुषे मम मानसेऽस्मिन् ।
आशाधरोक्तिकतकप्रसरैः प्रसन्ने ॥
उल्लासितेन शरदा पुरुदेवभक्त्या ।
तच्चंपुदंभजलजेन समुज्जंजृभे ॥ १ ॥

※ ॥ अयं पुरुदेवचंपुग्रंथः समाप्तः ॥ ※

---

१ कोमलगभीरार्थ प्रतिपादकैर्वचनैर्भव्यानां मुक्तिसुखप्राप्तिहेतुः देवसमूहसेवितचरणयुगलः पुरुदेवः श्रीप्रथमतीर्थंकरभट्टारकः जयतु । तथा मृदुवर्णैः गभीरार्थप्रतिपादकैर्वचनैः हर्षजनकः शृंगारादिरससमूहसेवितशब्दरचनोपेतोऽयंचम्पूग्रंथश्च आचंद्रार्कं जीयात् ॥

